श्रीभगवानुवाच—

मया प्रसन्नेन तवार्ज्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्व्वम् ॥४७॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥४९॥

विश्वधारणात्तु केवलमलौकिकपुरुषे तदानीमामोहत्वन्धार', अन्यथा पौण्ड्रवासुदेवस्य तच्चिह्नधारणेन न भवेन्निन्दार्हत्वं शासनार्हत्वञ्च । ४६ ।

भीतमर्ज्जुनं समाश्वासयन्नाह त्रिभिः—मयेति, न वेदेति, मा त इति त्रिभिः । हे अर्ज्जुन, प्रसन्नेन मया आत्मयोगात् स्वीययोगप्रभावात्—'आत्मन ऐश्वर्य्यस्य सामर्थ्यात्' इति श्रीमच्छङ्करः, 'आत्मनः सत्यसङ्कल्पत्वयोगयुक्तत्वात्' इति श्रीमद्रामानुजः, 'आत्मनो मम योगात् योगमायासामर्थ्यात्' इति श्रीमच्छ्रीधरः, 'निजाचिन्त्यशक्त्या' इति श्रीमद्बलदेवः, 'असाधारणनिजसामर्थ्यात्' इति श्रीमन्मधुसूदनः, 'स्वसामर्थ्यात्' इति श्रीमन्नीलकण्ठः—इदं परं श्रेष्ठं रूपं दर्शितम्, यत् तेजोमयं तेजःप्रचुरं तेजोराशिं—चिद्रूपमिति श्रीमन्नीलकण्ठः—अनन्तम् आद्यं विश्वं विश्वात्मकं मे मम रूपं त्वदन्येन त्वत्तोऽन्येन केनचित् न दृष्टपूर्व्वम् । न वेदयज्ञाध्ययनैः वेदानां यज्ञविद्यानां कल्प-

सञ्जय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥

सूत्राध्यानाश्च अध्ययनैः, न दानैः, न च क्रियाभिरग्निहोत्रादिभिः, नापि उग्रैः कृच्छ्रतमैः तपोभिः एवंरूपोऽहं, हे कुरुप्रवीर, त्वदन्येन त्वत्तोऽन्येन नृलोके मनुष्यलोके द्रष्टुं शक्यः। ईदृक् घोरं भीषणं मम इदं रूपं दृष्ट्वा मा ते व्यथा भूत् मा च विमूढभावो विमूढचित्तता भूत्, व्यपेतभीः विगतभयः प्रीतमनाः पुनस्त्वं तदेव त्वत्प्रार्थितमिदं रूपं प्रपश्य । ४७—४९ ।

इत्युक्त्वा किं कृतं तेनेत्याह सञ्जयः, इत्यर्जुनमिति । इत्येवमर्जुनं प्रति वासुदेवस्तथाभूतं वचनमुक्त्वा भूयः धारणाश्रयं स्वकं रूपं चतुर्भुजं—मानुषरूपमिति श्रीमन्नीलकण्ठः—दर्शयामास । पुनः महात्मा श्रीकृष्णः सौम्यवपुः द्विभुजो भूत्वा भीतमेनमर्जुनम् आश्वासयामास च । "संग्रामनिर्व्विष्टसहस्रबाहुः" रघु, ६स, ३[illegible] ). "संग्रामेषु युद्धेषु निर्व्विष्टा अनुभूताः सहस्रं बाहवो यस्य, स तथोक्तः, युद्धादन्यत्र द्विभुज एव दृश्यत इत्यर्थः" इति श्रीमन्मल्लिनाथकृतकालिदासीयव्याख्या यद्यप्यन्या तथाप्युद्दीप्तभावनिबन्धनान्यथादृष्टिः समर्थ्यतेऽनया । ५० ।

तस्य सौम्यं मानुषं रूपं दृष्ट्वार्जुन आह दृष्ट्वेति । हे जनार्दन, तव इदं सौम्यं मानुषं रूपं दृष्ट्वा इदानीं सचेताः प्रसन्नचित्तः संवृत्तः जातः, प्रकृतिं गतः स्वाभाविकावस्थां लब्धवान् । ५१ ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५२॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम ॥५३॥
भक्त्या त्वनन्यया शक्यो अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ॥५४॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।

विश्वरूपदर्शनं दुर्लभमिति प्रतिपादयत्याचार्यः सुदुर्दर्शमिति। यन्ममान्तर्यामिण इदं रूपं दृष्टवानसि तत् सुदुर्दर्शं, हृत्स्थमीश्वरमैकात्मभावेन सर्वमात्मन्यन्तर्भूय वर्त्तमानं द्रष्टुमधिकारी विरल एव। देवा अपि अस्य रूपस्य नित्यमविच्छेदेन दर्शनकाङ्क्षिणः दर्शनेच्छवः । ५२ ।

विविधसाधनसाध्यं नेदं दर्शनमित्याह नाहमिति। न वेदैः ऋग्यजुःसामाथर्ववेदैः, न तपसा कृच्छ्रसाधनेन, न दानेन गोभूमिहिरण्यादिवितरणेन, न च इज्यया यज्ञेन पूजया वा एवंविधोऽहं द्रष्टुं शक्यः यत् यथा मम रूपं दृष्टवानसि त्वम् । ५३ ।

साधनं चेन्निष्फलं किं प्रयासेनेत्यभिप्रायमभ्युपेत्य, भक्त्या स्यात् सफलप्रयास इत्याह भक्त्येति। अनन्यया अव्यभिचारिण्या मदेकनिष्ठया ऐकान्तिक्या भक्त्या तु, हे अर्जुन, एवंविधोऽहं तत्त्वेन तत्त्वतः यथायथं ज्ञातुं, द्रष्टुं साक्षात्कर्त्तुं, प्रवेष्टुमेकत्वमाप्तुं, हे परन्तप, शक्यः । ५४ ।

नैवमनन्या भक्तिर्हृदयस्यार्द्रभावमात्रं किन्तर्हि कर्मादीनामेकत्र सन्निवेशरूपेत्याह मत्कर्मकृदिति। मत्कर्मकृत् मदर्थं कर्म करोतीति

निर्व्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव ॥५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसंवादे विश्वरूपदर्शनो नामैकादशोऽध्यायः ।

मत्कर्म्मकृत्; तादृशकर्म्मानुष्ठानेऽभीष्टान्तरसिद्धिः स्यादित्यभिप्रायस्त-
स्य न विद्यते इति विशेषणान्तरेण दर्शयति—मत्परमः अहमन्तर्याम्येव
परमः प्राप्यत्वेन निश्चितः; मत्प्राप्त्याशयैव—मद्भक्तः मम भजनशीलः,
भजने नास्यास्ति विघ्नसम्भावना यतः—सङ्गवर्ज्जितः आसक्तिशून्यः ।
आसक्तिशून्यत्वेऽपि विद्वेषिषु द्वेषोऽपरिहार्यस्तेन च स्याद्भजनबाधः,
नास्यापि सम्भावनेत्याह—सर्व्वभूतेषु निर्व्वैरः शत्रुभावरहितः, एवम्भूतो
यो भक्तः, हे पाण्डव, स मामन्तर्यामिणमेति प्राप्नोति । पद्येऽस्मिन्
गीताशास्त्रस्य सारभूतोऽर्थो निबद्ध इति स्वीकृत्य सर्व्वसमन्वयमेवानु-
मोदितवन्तः प्राचीनव्याख्यातार इति सत्यस्यैव महिमा । "अधुना
सर्व्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थमनुष्ठेयत्वेन समुच्चित्यो-
च्यते मत्कर्म्मकृदिति" इति श्रीमच्छङ्करस्तदनुयायिनश्च । श्रीमद्रामा-
नुजो व्याख्यातवानिमं श्लोकमेवम्—"वेदाध्ययनादीनि सर्व्वाणि मदा-
राधनारूपाणीति यः करोति स मत्कर्म्मकृत्, मत्परमः सर्व्वेषामारम्भा-
णामहमेवोपदेश्यो यस्य स मत्परमः; अत्यर्थमत्प्रियत्वेन मत्कीर्त्तन-
[illegible]प्रणामादिभिर्विनात्मधारणमलभमानो मदेक[illegible]योजन-
तया यः सततं तानि करोति स मद्भक्तः; सङ्गवर्ज्जितः [illegible]कप्रियत्वे-
नेतरसङ्गमसहमानः; निर्व्वैरः सर्व्वभूतेषु मत्संश्लेषवियोगैकसुखदुःख-
स्वभावत्वात् स्वदुःखस्य स्वापराधनिमित्तत्वानुसन्धानात् सर्व्वभूतानां
परमपुरुषतन्त्रत्वानुसन्धानाच्च सर्व्वभूतेषु वैरनिमित्ताभावात् तेषु निर्व्वैरः;
य एवम्भूतः स मामेति मां यथावदवस्थितं प्राप्नोति निरस्ताविद्याद्य-
शेषदोषगन्धो मदेकानुभवो भवतीत्यर्थः" इति । श्रीमता नील-
कण्ठेन पद्येनानेन सर्व्वशास्त्रार्थसंग्रह एवं कृतः—"मदर्थमेव कर्म्म
करोतीति मत्कर्म्मकृत्, अहमेव परमो निष्कलः प्राप्यो यस्येति

# द्वादशोऽध्यायः ।

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

एकादशाध्यायात् पूर्व्वं यदुक्तं तेन निरुपाधिकं ब्रह्मैवोपास्यमित्याख्यातम्, एकादशेन सोपाधिकं ब्रह्मोपास्यमिति प्रतिभाति। पूर्व्वमुक्तं निरुपाधिकं ब्रह्म, सम्प्रत्युक्तं सोपाधिकं ब्रह्म ; एतयोरुपास्यत्वे सिद्धे कस्य वा तयोरुपासनं श्रेयस्तदेव पृच्छति एवमिति। अत्र श्रीमच्छङ्कर आह—"द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्व्वविशेषणस्योपासनमुक्तम्, सर्व्वयोगैश्वर्य्यसर्व्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तम्। विश्वरूपाध्याये तु ऐश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया। तच्च दर्शयित्वोक्तवानसि मत्कर्म्मकृदित्यादि। अतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति अर्ज्जुन उवाच एवमिति" इति। श्रीमद्रामानुज आह—"भक्तियोगनिष्ठानां प्राप्यभूतस्य भगवतो नारायणस्य निरङ्कुशैश्वर्य्यं साक्षात्कर्तुकामायार्ज्जुनाय अनवधिकातिशयकारुण्यसौन्दर्य्यौदार्य्यसौशील्यादिगुणसागरेण सत्यसङ्कल्पेन भगवता स्वैश्वर्य्यं यथावदवस्थितं दर्शितम्, उक्तञ्च तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्येकलभ्यत्वम्। अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनात् भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादनशैघ्र्यात् सुखोपादानाच्च श्रैष्ठ्यम् ; भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्ते। भगवदुपासनस्य प्राप्यभूतोपायस्य शैघ्र्यात् श्रेष्ठत्वम्—'योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥'

इत्यवोचम् ।" इति । श्रीमध्व आह—"अव्यक्तोपासनाद्व्यक्तोपा-
सनस्योत्तमत्वं प्रदर्श्य तदुपायं दर्शयत्यस्मिन्नध्याये" इति । श्रीम-
च्छ्रीधर आह—"पूर्व्वाध्यायान्ते 'मत्कर्म्मकृत् मत्परमो मद्भक्तः' इत्येवं
भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम्, 'कौन्तेय प्रतिजानीहि' इत्यादिना च तत्र
तत्रैव श्रेष्ठत्वं निर्णीतम्, तथा 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशि-
ष्यते' इत्यादिना 'सर्व्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' इत्यादिना च
ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम्, एवमुभयोः श्रेष्ठविशेषजिज्ञासया भगवन्त-
मर्ज्जुन उवाच एवमिति ।" इति । श्रीमद्बलदेव आह—"जीवात्मानं
यथावज्ज्ञात्वा, विज्ञाय च तदंशी हरिर्ध्येय इति 'अविनाशि तु
तद्विद्धि' इत्यादिभिर्द्वितीयादिष्वेकः पन्था वर्णितः । जीवात्मानं हरे-
रंशं ज्ञात्वैव तदंशी हरिः तच्छ्रवणादिभक्तिभिर्ध्येय इति 'मय्यासक्तमनाः
पार्थ' इत्यादिभिः सप्तमादिषु द्वितीयः पन्थाः प्रदर्शितः । तत्रैव 'प्रयाण-
काले' इत्यादिना योगोपसृष्टा 'ज्ञानयज्ञेन चाप्यन्ये' इत्यनेन ज्ञानोप-
सृष्टा च भक्तिरुक्ता । भक्तिषट्कात् प्राक् षष्ठान्ते केवलां भक्तिमुपदे-
क्ष्यतो 'योगिनामपि सर्व्वेषाम्' इत्यादिपद्येन स्वैकान्तिनां युक्ततमता
चाभिहिता । तत्रार्ज्जुनः पृच्छत्येवमिति ।" इति । श्रीमन्मधुसूदन
आह—"पूर्व्वाध्यायान्ते 'मत्कर्म्मकृत् मत्परमो मद्भक्तः सङ्गवर्ज्जितः ।
निर्व्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव' इत्युक्तम् । तत्र मच्छब्दार्थे
सन्देहः । किं निराकारमेव सर्व्वस्वरूपं वस्तु मच्छब्देनोक्तं भगवता,
किं वा साकारम् इत्युभयत्रापि प्रयोगदर्शनात्, 'बहूनां जन्मनामन्ते
ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्व्वमिति स महात्मा सुदुर्ल्लभः'
इत्यादौ निराकारं वस्तु व्यपदिष्टम्, विश्वरूपदर्शनानन्तरञ्च 'नाहं
वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि
मां यथा ॥' इति साकारं वस्तु । उभयोश्च भगवदुपदेशयोरधिकारि-
भेदेनैव व्यवस्थया भवितव्यम्, अन्यथा विरोधात् । तदेवं सति मया
मुमुक्षुणा किं निराकारमेव चिन्तनीयम्, किं वा साकारमिति स्वाधि-
कारनिश्चयाय सगुणनिर्गुणयोर्विशेषबुभुत्सया अर्ज्जुन उवाच एवमिति"

इति । श्रीमन्नीलकण्ठ आह—"पूर्व्वाध्यायान्ते 'मत्कर्म्मकृन्मत्परमः' इत्यादिना भजनमुक्तम्, तत्र मच्छब्दार्थं किं सगुणमुत निर्गुणं ब्रह्म, उभयथापि मच्छब्दस्य पूर्व्वं प्रयोगदर्शनात् सन्दिहानः पृच्छति एव-मिति" इति । श्रीमद्विश्वनाथ आह—"भक्तिप्रकरणस्योपक्रमे 'योगि-नामपि सर्व्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' इति भक्तेः सर्व्वोत्कर्षो यथा श्रुतः तथैवोपसंहारेऽपि तस्या एव सर्व्वोत्कर्षं श्रोतुकामः पृच्छति" इति । "'द्वे रूपे वासुदेवस्य व्यक्तं चाव्यक्तमेव च । अव्यक्तं ब्रह्मणो रूपं व्यक्तमेतच्चराचरम् ॥' इति स्मरणात् अव्यक्तं निर्व्विशेषं परं ब्रह्म, व्यक्तन्तु मायोपाधिकमपरं ब्रह्म सकार्य्यम्" इति यन्निर्णीतं श्रीमता शङ्करानन्देन तात्पर्य्यबोधिन्यां 'ये यथा मां प्रपद्यन्ते' (४।११) इत्यत्र तदेवाभिमतं श्रीमच्छङ्करस्य तदनु-गामिनाञ्च, वैष्णवाचार्य्याणान्त्वेतद्विपरीतम् । तेषां पुनरैश्वर्य्यवदेव परं ब्रह्म, अनैश्वर्य्यवदपरं विभूतिर्वा । उक्तञ्च श्रीमन्माध्वभाष्यव्याख्याप्र-मेयदीपिकाकृता श्रीमता जयतीर्थेन "भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव । न च भगवानेव ब्रह्म तस्य तदुत्तमत्वेन ततो-ऽन्यत्वात्" इति । तथाच श्रीमता रूपेण लघुभागवतामृते "भगवांस्तु परब्रह्म परात्मा परमेश्वरः । सुसान्द्रसच्चिदानन्दविग्रहो महिमार्णवः ॥ सगुणत्वागुणत्वादिविरोधाः प्रविशन्ति तम् । महाविभूतिर्ब्रह्मास्य प्रसिद्धेत्यं तयोर्भिदा ॥'' इति ।

अन्वीऽन्त्यं मय्येवमिति । एवं सततयुक्ताः 'मत्कर्म्मकृत्' इत्याद्युक्त-प्रकारेण नित्यं समाहितचित्तास्त्वन्निष्ठाः सन्तो ये भक्तास्त्वां सर्व्वान्त-र्यामिणं यथादर्शितविश्वरूपमिति श्रीमच्छङ्करः पर्य्युपासते ध्यायन्ति, ये चापि अक्षरम् अस्थूलादिलक्षणं निर्व्विशेषं ब्रह्म, अतोऽव्यक्तं चक्षु-रद्यगोचरं पर्य्युपासते, तेषां मध्ये योगवित्तमाः के ? अत्र श्रीमद्रामा-नुजः—"एवं 'मत्कर्म्मकृत्' इत्यनोक्तेन प्रकारेण सततयुक्ता भगवन्तं त्वामेव परमप्राप्यं मन्वाना ये भक्तास्त्वां सकलविभूतियुक्तमनवधिका-तिशयसौन्दर्य्यसौशील्यसार्व्वज्ञसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणसागरं परि-

श्रीभगवानुवाच—

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**

**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥**

पूर्व्वमुपासते, ये चाप्यक्षरं प्रत्यगात्मस्वरूपं तदेवाव्यक्तं चक्षुरादिकरणै-रनभिव्यक्तस्वरूपमुपासते तेषामुभयेषां के योगवित्तमाः के स्वसाध्यं प्रति शीघ्रगामिन इत्यर्थः। 'भवामि न चिरात् पार्थ मय्यावेशितचेत-साम्' इत्युत्तरत्र योगवित्तमत्वं शैघ्र्यविषयमिति व्यञ्जयिष्यते" इति। श्रीमन्मधुसूदनः—"एवं 'मत्कर्म्मकृत्' इत्यादनन्तरोक्तेन प्रकारेण सतत-युक्ता नैरन्तर्य्येण भगवत्कर्म्मादौ सावधानतया प्रवृत्ता भगवद्भक्ताः साका-रावस्थैकशरणास्त्वामेवंविधं साकारं पर्य्युपासते सततं चिन्तयन्ति, ये चापि सर्व्वतो विरक्तास्त्यक्तसर्व्वकर्म्माणोऽक्षरं·······सर्व्वोपाधिरहितं निर्गुणं ब्रह्म, अतएवाव्यक्तं सर्व्वकरणागोचरं निराकारं त्वां पर्य्युपा-सते, तेषामुभयेषां मध्ये के योगवित्तमा अतिशयेन योगिनः·····केषां ज्ञानं मयानुसरणीयमित्यर्थः" इति। १।

प्रश्नस्योत्तरमाह मयीति। मयि सर्व्वान्तर्यामिणि—विश्वरूपे पर-मेश्वरे इति श्रीमच्छङ्करः, परमेश्वरे सर्व्वज्ञत्वादिगुणविशिष्टे इति श्रीम-च्छ्रीधरः, नीलोत्पलश्यामलत्वादिधर्म्मिणि स्वयं भगवति देवकीसूना-विति श्रीमद्बलदेवः, श्यामसुन्दराकारे इति श्रीमद्विश्वनाथः, भगवति वासुदेवे परमेश्वरे सगुणे ब्रह्मणि इति श्रीमन्मधुसूदनः—नित्ययुक्ताः सततोद्युक्ता मन्निष्ठाः, परया प्रकृष्टया श्रद्धया उपेता युक्ता उपासते, ते युक्ततमा योगवित्तमा मे मम मताः। अत्र सगुणब्रह्मोपासनस्य श्रेष्ठ-त्वमाचार्य्याभिमतं पश्यन्तो निर्गुणब्रह्मोपासनस्य श्रेष्ठत्वादिमस्तदसहमाना इव अर्ज्जुनस्य निर्गुणोपासनानधिकारित्वमेव श्रेष्ठत्वखण्डने कारणमुद्भा-वयन्ति, तथाहि श्रीमन्मधुसूदनः—"अत सर्व्वज्ञो भगवानर्ज्जुनस्य सगुण-विद्यायामेवाधिकारं पश्यंस्तं प्रति तां विधास्यति यथाधिकारं तार-तम्योपेतानि साधनानि च" इति। श्रीमन्नीलकण्ठस्तु "निर्गुणस्य

ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते ।
सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥३॥
संनियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः ॥४॥

दुष्प्राप्यत्वोक्त्यैव श्रेष्ठत्वं सूचयन् सगुणप्राशस्त्यञ्च शब्दतो दर्शयन् श्रीभगवानुवाच” इत्युक्ता “मे मम ‘ज्ञानी त्वात्मैव मे मतम्’ इति ज्ञानिनमात्मत्वेनैव पश्यतो मूर्खेष्वपि कारुण्यात् पक्षपातवतः सर्व्वज्ञस्य युक्ततमा मताः” इत्याह । स्वयं श्रीमच्छङ्करस्तु “न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम्” इति युक्त्या निर्गुणोपासकानां श्रेष्ठत्वं संसाध्य सगुणोपासकानां श्रेष्ठत्वनिर्व्वचने हेतुर्नैरन्तर्य्येण भगवच्चित्ततया तेषामहोरात्रातिवाहनमित्युक्तवान् । वस्तुतस्तु स्वसाध्यं प्रति शीघ्रगामित्वमशीघ्रगामित्वमेव युक्ततमत्वे हेतुरिति श्रीमद्रामानुजदत्ता युक्तिरेव साधीयसी स्वयमाचार्य्येण तथैवोक्तत्वात्—“क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते” “भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्” इत्यत्र । २ ।

अक्षरोपासनेनापि सर्व्वान्तर्यामिणमेव प्राप्नुवन्तीत्याह ये त्विति संनियम्येति । ये त्वक्षरं परमं ब्रह्म—प्रत्यगात्मस्वरूपमिति श्रीमद्रामानुजः, निर्व्विशेषं ब्रह्मेति श्रीमन्मधुसूदनः, अस्थूलमनण्वादिश्रुत्या सर्व्वधर्म्मशून्यमिति श्रीमन्नीलकण्ठः—अनिर्द्देश्यं निर्द्दिष्टुमशक्यम्—देहादन्यतया देवादिशब्दानिर्द्देश्यमिति श्रीमद्रामानुजः, शब्देन व्यपदेष्टुमशक्यमिति श्रीमन्मधुसूदनः ; अव्यक्तं प्रपञ्चातीतमिन्द्रियाविषयम्—न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तमिति श्रीमच्छङ्करः, रूपादिहीनमिति श्रीमच्छ्रीधरः, शब्दप्रवृत्तिनिमित्तैर्जातिगुणक्रियासम्बन्धैरहितमिति श्रीमन्मधुसूदनः—सर्व्वत्रगं सर्व्वव्यापि—सर्व्वव्यापि सर्व्वकारणमतो जात्यादिशून्यमिति श्रीमन्मधुसूदनः, सत्तारूपेण स्फुरणरूपेण सर्व्वत्र गतमिति श्रीमन्नीलकण्ठः ; अचिन्त्यं चिन्तयितुमशक्यम्—

देवादिदेहेषु वर्त्तमानमपि तद्विजातीयतया तेन रूपेण चिन्तयितुमन-र्हमिति श्रीमद्रामानुजः ; कूटस्थं निर्व्विकारं सर्व्वकालमेकस्वभाव-तया स्थितं संसर्गानित्यतारूपम्---मायाप्रकृत्यादिशब्दवाच्यतया प्रसिद्धं यत् तत् कूटं तस्मिन् कूटे स्थितमिति श्रीमच्छङ्करस्तदनुयायिनश्च, कूटस्थं सर्व्वसाधारणमतो देवाद्यसाधारणाकारासम्बन्धमिति श्रीमद्रामा-नुजः, 'ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्य्यनुत्पत्त्यवृद्ध्यव्यययोगि यत् तन्नित्यम्' इति श्रीपतञ्जलिप्रोक्ते नित्यलक्षणे श्रीमत्कैयट आह 'तत्र ध्रुवं कूटस्थमिति संसर्गानित्यता परिहृता,' 'संसर्गानित्यता यथा स्फाटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः'---; अचलं निःस्पन्दम्, ध्रुवं नित्यं वृद्ध्यादिरहितमप्रच्युतस्वभावम् इन्द्रि-यग्राममिन्द्रियसमुदायं संनियम्य संहृत्य सर्व्वत्र सर्व्वस्मिन् काले समबुद्धयः इष्टानिष्टप्राप्तौ समा तुल्या बुद्धिर्येषां ते मां सर्व्वान्त-र्यामिणमेव प्राप्नुवन्ति। कथम् ? सर्व्वभूतहिते रताः, सर्व्वेषां भूतानां मदन्तःस्थानां हिते रताः। अक्षरस्य सर्व्वगत्वचिन्तया मया सर्व्वं ततमिति ज्ञानवन्तः, कूटस्थत्वचिन्तया लब्धेनाक्षरस्य प्रपञ्चातीतत्वज्ञानेन भूतानां तदन्तःस्थत्वनिर्द्धारणवन्तः। एवं निर्द्धार्य्य तेषां हिते रताः, सुतरां "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्॥" (८।२२) इति परमपुरुषज्ञानं लब्धवन्तो ये "परस्तस्मात्तु भावोऽन्यो-ऽव्यक्तोऽव्यक्तात् सनातनः। यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति। अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्॥" (८।२०।२१) इत्यक्षर-चिन्तनरता आसन्।

'मय्यावेश्य मनः' 'ते प्राप्नुवन्ति मामेव' इत्यत्र व्याख्यातारो विश्व-रूपादिकं निर्द्धारितवन्तः, वयन्तु सर्व्वान्तर्यामिणमिति पार्थक्यं संस्का-रदोषमस्माकमुद्भावयतीति विप्रतिपत्तिः---'वयन्तु यस्योक्तिरियं गीता प्रधानतस्तदुक्त्यनुसरणेन तस्या व्याख्याने कृतमनोरथाः' इत्यस्माकं समयं स्मारयित्वा, कोऽयमुपालम्भोऽस्मिन् शास्त्रे स्वयमाचार्य्येणोपदिष्ट

इति तदर्थमेव दर्शयित्वा—अपाकर्त्तव्या। "सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः" (६।३१) इत्यादिषु सर्वभूतस्थस्यान्तर्यामिणो भजनमेव स्वयमाचार्य्येणोपदिष्टमिति न केनाप्यन्यथा कर्त्तुं शक्यम्। स्वयं भाष्यकृता श्रीमता शङ्करेणातएव भाष्यारम्भे पौराणिकवचनेनान्तर्यामिणमेवानुस्मृतवान्। तद्यथा—"ओं नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्। अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥" उक्तोऽस्याभिप्रायः श्रीमदानन्दगिरिणा—"भगवान् भाष्यकारः·········इतिहासपुराणयोः प्रख्यापयिष्यमाणगीताशास्त्रेण एकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति नारायण इति। 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥' इति स्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः, सूक्ष्मदर्शिनः पुनराचक्षते—नरशब्देन चराचरात्मकं शरीरजातमुच्यते, तत्र नितरामभिव्यक्ताश्चिदाभासा जीवा नारा इति निरुच्यते, तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति यमधिकृत्यान्तर्यामिब्राह्मणम्, श्रीनारायणाख्यमथाम्नायश्चाधीयते, तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति।" इति। ननु स्थूलं विश्वरूपमेव गीताशास्त्रस्योपास्यं भवितुमर्हति, अन्यथा तत्प्रदर्शनस्य व्यर्थत्वमायाति। न, "त्वया ततं विश्वमनन्तरूप" (११।३८), "सर्व्वं समाप्नोषि ततोऽसि सर्व्वः" (११।४०) इत्यादिभिः प्रदर्श्यते "यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्" (८।२२) इति परमपुरुषस्य सर्व्वान्तर्भावकत्व सर्व्वगतत्वस्य प्रत्यक्षविषयं कर्त्तुं विश्वरूपप्रदर्शनम्, अन्यथाचार्य्येणोपसंहारे "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति" (१८।६१), "तमेव शरणं गच्छ सर्व्वभावेन भारत" (१८।६२) इति सर्व्वान्तर्याम्युपास्यत्वेन नोपन्यस्येत। यद्येवं कथमाचार्य्येणोक्तम् "इदं रूपं परं दर्शितमात्मयोगात्" (११।४७) इति? "न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः। एवंरूपः शक्यो अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर" (११।४८) इति यदाचार्य्येणोक्तं तेन 'अहमन्तर्यामी एवंरूपः' सर्व्वगत :

कर्म्मस्वपि विद्यमान इति तत् कल्पयोगस्य कथं "विश्वरूप-
मिति पराशर:, तत्र प्रतारणीकरणमेवाभिप्रेतम्। यत्तु विष्णुपुराणे
प्रोक्तम्—"अक्षीणेषु समस्तेषु विशेषज्ञानकर्म्मसु। विश्वमेतत् परं
चान्यद्भेदभिन्नदृशां नृप॥ प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥ तच्च विष्णोः परं रूप-
मरूपाख्यमनक्षरम्। विश्वरूपाच्च वैरूप्यलक्षणं परमात्मनः॥ न
तद्योगयुजा शक्यं नृप चिन्तयितुं यतः। ततः स्थूलं हरे रूपं
चिन्तयेद्विश्वगोचरम्॥ हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः।
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः॥ गन्धर्व्वयक्षा दैत्याद्याः
सकला देवयोनयः। मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः॥
भूप भूतान्यशेषाणि भूतानां ये च हेतवः। प्रधानादिविशेषान्तं
चेतनाचेतनात्मकम्॥ एकपादं द्विपादञ्च बहुपादमपादकम्। मूर्त्त-
मेतत् हरे रूपं भावनात्रितयात्मकम्॥" (वि, पु, ६ अं, ७ अ, ५२—
५८श्लो) इति, तत् पुनर्भगवच्छक्तिव्याप्तत्वेन चिन्तनीयं स्थूलरूपमित्य-
भिप्रेत्य, अतएवोक्तम् "एतत्सर्व्वमिदं विश्वं जगदेतच्चराचरम्। पर-
ब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्॥" (६०श्लो); टीका च—
"एतच्च न तत्त्वतो विष्णोः स्वरूपमिति चिन्तनीयं किन्तु तच्छक्ति-
व्याप्तमित्याह शक्तिसमन्वितमिति।" इति। मूर्त्तं भगवच्छक्ति-
व्याप्तत्वं चिन्तनीयम् अमूर्त्तं तु अक्षरः परमपुरुषश्च, तद्यथा—
"अमूर्त्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः। समस्ताः शक्तयश्चैता नृप
यत्र प्रतिष्ठिताः॥ तद्विश्वरूपरूपं वै रूपमन्यद्धरेर्महत्। समस्त-
शक्तिरूपाणि तत्करोति जनेश्वर॥ देवतिर्य्यङ्मनुष्यादिचेष्टावन्ति स्वली-
लया। जगतामुपकाराय न सा कर्म्मनिमित्तजा। चेष्टा तस्याप्रमे-
यस्य व्याप्तिन्यव्याहतात्मिका॥" (वि, पु, ६ अं, ७ अ, ६९—७१श्लो)
इति। अस्मिन् शास्त्रे परोक्षभावं परित्यज्यापरोक्षभाव एवोपदिष्ट
इति अक्षरस्य परमपुरुषस्योपास्यत्वेनोपस्थापितः—"परस्तस्मात्तु भावो-
ऽन्योऽव्यक्तोऽव्यक्तात् सनातनः। यः स सर्व्वेषु भूतेषु नश्यत्सु न विन-

यति ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम् ॥" (८।२०—२२) इत्येवमादिभिः।

गीताशास्त्रस्य सर्व्ववेदवेदान्तसारभूतत्वात् कुतो वेतद्द्विविधमुपासनं क्रमेणाभिव्यक्तमित्यत्र चिन्तनीयम्। दृश्यते पुनर्ऋक्संहितायां सर्व्वासु मन्त्रेषु क्रियास्वेकैव शक्तिर्विराजतेऽतः एकैकाया सर्व्वस्वैकत्वम् —"महद्देवानामसुरत्वमेकम्" (ऋक्सं, ३म, ५५स, १—२२ऋक्) इति ऋचामन्तिमवाक्येन। "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्ज्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" (१०।४१) इत्युक्तिस्वाचार्य्यस्य ऋगुक्तं शक्त्येकत्वं ज्ञानभूमावधिरोहयति। वेदान्तेषु पुनः प्रथमं (छा, उ, ४।५) प्रकाशवत्त्वेन दिक्षु, अनन्तत्वेन पृथिव्यन्तरिक्षदिवसमुद्रेषु, ज्योतिष्मत्त्वेनाग्निसूर्य्यचन्द्रविद्युत्सु, आयतनत्वेन प्राणचक्षुःश्रोत्रमनःसु ब्रह्मोपासना विहिता। तदनन्तरम् (छा, उ, ७।१—१५) उत्तरोत्तरभूयस्त्वेन नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नतेजआकाशस्मराशाप्राणेषु ब्रह्मदृष्टिं विधाय सर्व्वांस्तानात्मन्यन्तर्भूय (छा, उ, ७।२३—२६) भूमाहमात्मसु व्याप्तित्वेन ब्रह्मोपासनं विहितम्। आदित्यादिष्वात्मनि चाधिष्ठितेन पुरुषेणाभिदा ब्रह्मोपासना च (बृ, आ, उ, ४।१) दृश्यते। अन्नप्राणमनोविज्ञानानन्देषु ब्रह्मान्वेषणमन्नमयादिपञ्चकोषविचारत्वेन गृहीतम्। तत्र (तै, उ, २।१—५) अन्नरसमयो हि पुरुषस्य देहः, सुतरामन्नमयकोषविचारे प्रथमस्तावत् स्वदेहे ब्रह्मान्वेषणं विहितम्। अन्नन्तु मूर्त्तं जगत् (ऐ, उ, ३।२), अतोऽन्नमयकोषविचारे सर्व्वं विश्वं देहत्वेन परिकल्प्य तत्र ब्रह्मान्वेषणमपि सिद्ध्यति। यतः प्राण एवान्नस्य भोक्ता (छा, उ, ५।२।१), देहस्य सर्व्वाश्चेष्टाश्च तत एव प्रसरन्ति, अतोऽन्नात् प्राणस्य श्रेष्ठत्वात् तस्मिन् ब्रह्मान्वेषणं प्राणमयकोषविचारे विहितम्। "प्राणो ह्येष यः सर्व्वभूतैर्विभाति" (मु, उ, ३।१।४) इत्यत्र प्राणस्य प्राणत्वेन प्रत्यक्षी-

ज्ञानं ब्रह्मेत्यन्यदेव। आत्मायमयत्वान्मनसः प्राणादपि तत्र कैवल्यम्। मनसि ब्रह्मान्वेषणं न सम्यग्भवति तत्र सङ्कल्पविकल्पमयत्वादतो विज्ञाने बुद्धौ निश्चयात्मिकायां ब्रह्मान्वेषणं विज्ञानमयकोषविचारे द्रष्टव्यम्। बुद्ध्या निश्चयात्मिकयानुष्ठीयमानेन कर्म्मणा चित्तशुद्धावा-नन्दस्योदयः। आनन्दे ब्रह्मान्वेषणस्य पूर्णता। अत आनन्दमयकोष-परमः। किमिदं ब्रह्म? "सत्यं ज्ञानमनन्तम्" (तै, उ, २।१) इति। एवं वेदान्तेषु सर्व्वत्र मूर्त्तामूर्त्तेषु ब्रह्मविमर्शनम्—"द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च—मर्त्यञ्चामृतञ्च, स्थितञ्च यच्च, सच्च त्यच्च। (वृ, आ, उ, ४।३।१) इति। अस्या अर्थः—मूर्त्तं हि मर्त्यं, स्थितं परि-च्छिन्नं, सत् प्रत्यक्षेणोपलभ्यम्; अमूर्त्तं पुनः अमृतम्, यत् अपरि-च्छिन्नं व्यापि, त्यच्च चक्षुरादेरविषयम्। मूर्त्तं पृथिव्यप्तेजश्च, अमूर्त्तं वायुरन्तरिक्षञ्च (वृ, आ, उ, ४।३।२—५)। "शं नो मित्रः, शं वरुणः, शं नो भवत्वर्य्यमा, शं न इन्द्रो बृहस्पतिः, शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे, नमस्ते वायो, त्वमेव प्रत्यक्षं ब्रह्मासि, त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि (तै, उ, १।१) इत्यत्रामूर्त्तवायुरेव प्रत्यक्षब्रह्मत्वेन गृहीतः। एवं दृश्यते जगता जीवेन चाभिदा ब्रह्मोपलब्धिर्न पुनस्तदतीतत्वेन। "सर्व्वं खल्विदं ब्रह्म तज्जलानिति" (छा, उ, ३।१४।१) इति सर्व्वदृष्ट्या ब्रह्मोपासनम्। इयं शाण्डिल्यविद्या, अतएव हि तदनुसारि शाण्डिल्य-सूत्रम्—"भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात्। ८५।" इति। "वासुदेवः सर्व्वम्" (७।१९) इत्यत्र, "सर्व्वं समाप्नोषि ततो-ऽसि सर्व्वः" (११।४०) इत्यनेनान्यदेव। एवं यदि वेदान्तेषु जगज्जी-वस्य ब्रह्मैवोपास्यत्वेन परिगृहीतं, कुतस्तदतीतत्वेन तस्य ग्रहणं प्रश-स्तम्? तदपि वेदान्ते परिलक्ष्यते, तद्यथा—"नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं, न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्, अदृष्टमग्राह्यमलक्षण-मचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतम् चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः (मा, उ, ७) इति। युगपज्जग-ज्जीवत्वेन तदतीतत्वेन च गृहीतोपासनमन्तर्यामिब्रह्मणि स्फुटतर-

मासीत् । तद्यथा—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इत्येवं पृथिव्यबग्न्यन्तरिक्षवायुदिवादित्यदिक्चन्द्रतारकाकाशतमस्तेजोभूतप्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानात्मरेतःसु तिष्ठन्तं तदतीतमन्तर्यामिणमुपदिष्टवदन्तर्यामिब्राह्मणम् । गीताशास्त्रे पुनस्तस्यैवोपास्यत्वम् ।

अन्तर्यामी पुनर्ब्रह्मणि सर्व्वात्मत्वेन गृहीतः । आचार्य्योऽपि विभूतिनिर्व्वचनप्रारम्भे तमात्मत्वेन गृहीतवान् । यथा—"अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः" (१०।२०) इति । "आत्मैव पारमार्थिकं रूपम्" इति श्रीमच्छङ्करेणोक्तम् । तत्तु स्वरूपैक्यवशाद्यद्यपि नासमञ्जसमिति लक्ष्यते तथापि जीवात्मनोऽल्पज्ञत्वादिवशात् परमात्मनो भिन्नत्वमस्य नापैति । "सर्व्वकारणत्वेन सर्व्वज्ञत्वेन सर्व्वेश्वरत्वेन च परस्य ध्येयत्वमपेक्षितं नान्यस्य कस्यचित्कारणस्यादित्यादिषु ध्येयता" इति यत्तेनोक्तं तदिहापि बोध्यम् । "अहमात्मा" इत्यत्राहंशब्दवाच्योऽन्तर्याम्येव ध्येयो न तु जीवः । अन्तर्यामिणो ध्येयत्वे "नभो लिङ्गमलिङ्गमीश्वरम्" (भा, १स्क, ६अ, १६श्लो) इति युक्तिमनुसृत्यात्मलिङ्गेन तस्य ध्यानमिति प्राहुः । "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथन्तदुपलभ्यते ॥" (कठ, ६।१२) इत्यस्तित्वमात्रत्वेन ग्रहणं न जातु दुष्करं चिन्तया तस्यानपाकरणीयत्वात् । अनपायश्चैवमस्तित्वमिदमात्मनः परमात्मनो वेति संशयोऽकिञ्चित्करोऽनन्तसत्तायामात्मनोऽणुत्वेन भासमानत्वात् । प्रथमन्तावत् सत्तामात्रधारणां विना परमात्मनो विशेषज्ञानं न सम्भवत्यत आचार्य्यः "तस्मात्तु भावोऽन्योऽव्यक्तः" (८।२०) इति सत्तामात्रमुपदिष्टवान् । तदनन्तरं "यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्" (८।२२) इति परमपुरुषं ध्येयत्वेनाख्यापयत् । अस्मिन्नपि "मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना । मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः ॥" (९।४), "अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः" (७।२४) इत्यादि-

क्रिमे तस्य सत्तामात्रत्वं कदाप्यपैति। सा सत्ता भूमत्वेन गृहीता एवं चेयम्—"स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्व्वम्" इति ; अन्तर्यामित्वेन गृहीता —"अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतो-ऽहमुत्तरतोऽहमेवेदं सर्व्वम्" इति ; आत्मत्वेन गृहीता—"आत्मैवाध-स्तादात्मोपरिष्टादात्मा पुरस्तादात्मा पश्चादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्व्वम्" इति (छा, उ, ७।२५।१।२)। एवंचिन्तनस्य फलन्तु तत्रैव—"एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड़ आत्म-मिथुन आत्मानन्दः स स्वराड़् भवति तस्य सर्व्वेषु लोकेषु कामचारो भवति" (७।२५।२) इति। "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखम्" (छा, उ, ७।२३।१), "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा, उ, ७।२४।१) इत्यनुसारतः—"सत्यं ज्ञानमनन्तं ब्रह्म" (तै, उ, २।१) इति श्रुत्या सच्चिद्ब्रह्म यदानन्दत्वेनोप-लभ्यते—तदैव भूमत्वं तस्य साधकसन्निधौ प्रत्यक्षं भवति। "यः सर्व्वज्ञः सर्व्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति॥" (मु, उ, २।२।७) इत्यस्यां श्रुतौ पञ्चकोषविचारनिष्पन्नब्रह्मज्ञानस्य विस्तृत-भूमौ नियोगः, तस्मिन्नानन्दानुभवश्च सुव्यक्तः। अतः "सत्यं ज्ञानमन-न्तम्" इति ब्रह्मस्वरूपसाधनस्य परिपूर्त्तिर्जगति जीवे च तदनुभूय हृत्वा, न पुनस्तदतीतत्वेन। तत्तु "एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतम्" (मा, उ, ७) इत्यत्र। प्रपञ्चातीतोऽपि परमपुरुषः शिवस्वरूपत्वेन स्रष्टा पाता चाद्वैतत्वेन विविधेषु भावेषु प्रकाशमानो-ऽपि न स्वस्य स्वरूपैक्यं जहातीति बोध्यम्। शिवस्वरूपस्य निर्व्वचनं श्वेताश्वतरोपनिषदि यथा—"सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः। सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः॥" (श्वे, उ, ३।११), "सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम्। विश्व-

स्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥" (श्वे, उ, ४।१४), "घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्व्वभूतेषु गूढ़म् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्व्वपापैः ॥" (श्वे, उ, ४।१६), "भावग्राह्यमनीड़ाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥" (श्वे, उ, ५।१४) इति । "शान्तं शिवमद्वैतम्" इति श्रुत्या स्वरूपचिन्तनेन किं भवति श्रुत्यन्तरेण तदाकलयितव्यम्, तद्यथा—"यस्तु सर्व्वाणि भूतानि आत्मन्येवानुपश्यति । सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ यस्मिन् सर्व्वाणि भूतानि आत्मैवाभूत् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भुर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥" (वा सं, उ, ६।७८) इति । एकत्वमनुपश्यतः सर्व्वभूतेषु विद्वषभावं परिजहतः "शुद्धमपापविद्धम्" इति ब्रह्मस्वरूपैक्यमुपतिष्ठते, हृदयस्य शुद्धतया "याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इति भगवतो लीलां पश्यन् स "रसो वै सः" (तै, उ, २।७) इति रसस्वरूपमानन्दघनं ब्रह्म साक्षात्सम्बन्धेनोपलभते । अस्यामवस्थायां साधकस्यास्य भगवतोऽणुमात्रविच्छेदोऽपि विषयो भवति— "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ भयं भवति ।" (तै, उ, २।७) इति । साधुक्तं वल्लभसम्प्रदायानुसारिण्यामृततरङ्गिण्या "सर्व्वभूतस्थमात्मानम्" (६।२९), "यो मां पश्यति सर्व्वत्र" (६।३०) इति श्लोकद्वयस्य व्याख्यायाम्—"सर्व्वभूतस्थमिति । योगयुक्तात्मा भगवत्संयोगे युक्त आत्मा सर्व्वत्र संयोगवियोगभावे समदर्शनः । आत्मानं भगवन्तं सर्व्वभूतस्थं वियोगावस्थायां पुनः आत्मनि भगवत्स्वरूपे, संयोगावस्थायां सर्व्वभूतानि आत्मनि ईक्षते पश्यतीत्यर्थः । एतेन भगवत्स्वरूपज्ञानात् अत्यन्तसुखयुक्तमिति भावः ।" "एवं स्वरूपज्ञानफलमाह यो मामिति । यः सर्व्वत्र जीवेषु वियोगावस्थायां मां पश्यति, संयोगावस्थायां मयि सर्व्वं

पश्यति तस्य अहं न प्रणश्यामि न कदाचिदपि वियुक्तो भवामि, स च मेऽतः न प्रणश्यति वियुक्तो भवतीत्यर्थः ।" इति । संयोगे विप्रयोगे च साधकानुभूतिर्निबद्धा वैष्णवाचार्य्यैरेवम्—"सङ्गमविरह-विकल्पे वरमिह विरहो न सङ्गमस्तस्य । एकः स एव सङ्गे त्रिभुवन-मपि तन्मयं विरहे ॥" इति ।

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" (तै, उ, ३।१) इति वेदान्त-सम्मतं ब्रह्मलक्षणं "प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्" (९। १८) इत्यत्र दृश्यते । नैतावन्मात्रेण साधकस्य कृतार्थता, अतो विविध-सम्बन्धा अप्याचार्य्येणोपदिष्टाः परेण—"पिताहमस्य जगतो माता धाता पितामहः ।" (९।१७) "गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् । (९।१८) "सखा पिता पितृतमः पितॄणाम् (४।१७।१७) इत्या-द्यासु श्रुतिषु दृश्यन्ते विविधाः सम्बन्धाः । अतो निर्विशेषाद्वैतपन्थ्या-स्वनिर्णये माधितमाचार्य्येण । अन्तर्यामिण्येव सम्बन्धारोपः किन्त्व-ज्ञानतः सर्वथा तस्यानिर्व्वचनीयत्वात् ? वचनविषयं कृत्वा सर्व्वथा-निर्व्वचनीयत्वापत्तिर्न खलु शोभते । "एकात्मप्रत्ययसारम्" (मा, उ, ७) इत्यात्मप्रत्ययगोचरत्वं तस्य, सुतरां वचनविषयतां तस्यायाति । अस्तीति निरूपणं कस्याप्यस्तित्वं सूचयति । कस्य ? यो भूतानां प्रवृत्तिः, येन च तेषां जीवननिर्व्वाहः, यस्मिंश्च तेषां स्थितिरिति । नेति नेतीति निषेधेऽपि निरवधिनिषेधस्यासम्भवात् तस्मिन्नेव शब्दस्य पर्य्य-वसानम् । अतएवाह भागवतम्—"श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः" (भा, १०स्क, ८७अ, ३७श्लो) इति । एवं सति सर्व्वथा-निर्व्वचनीयत्ववादो वृथा वितण्डैव । अनिर्व्वचनीयत्वं खल्वनन्तस्य सम्यग्वचनीयत्वासम्भवात् । अतएवाह श्रुतिः—"यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते, मन्ये विदितम् ॥ नाहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ यस्यामतं तस्य

मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते॥" (तल, उ, ८—१२) इति। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" इति, तस्य शक्तिमत्त्वम् "प्रतिबोधविदितम्" इत्यस्य सर्व्वप्रत्ययदर्शित्वम् ज्ञानस्वरूपत्वं वा। "सत्यं ज्ञानमनन्तम्" (तै, उ, २।१) इत्यत्र सत्यं "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा, उ, ६।४।८) इति शक्तिमत्त्वेन सत्स्वरूपम्। क्रियोन्मुखं ज्ञानमेव शक्तिरिति मतं नासमञ्जसम्, ज्ञानस्यैव स्वप्रकाशपरप्रकाशसामर्थ्ययुक्तत्वात्। न हि परब्रह्मणि परस्परविरुद्धानि स्वरूपाणि जातु सम्भवन्त्यत्यन्तभिन्नानि वा। एकस्वरूपस्य तस्य जगज्जीवाभ्यां सम्बन्धपर्य्यालोचनया भिन्नस्वरूपत्वं प्रतिभातीति तत्त्वे ज्ञायमाने ब्रह्मस्वरूपघटितो विवादो निर्म्मूल एवेत्यवभासते। यदि सन्मूलमेव सर्व्वं तदा सच्छक्तिमत्, अन्यथा न ततो जगज्जीवप्रवृत्तिः स्यात्। "परास्य शक्तिर्व्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वे, उ, ६।८) इति शक्तित्वे कथं सतः शक्तिरित्युक्तिः? शक्तिर्हि क्रियाव्यञ्जिका। विनारम्भेण क्रिया न बुद्धौ प्रतिभाति। आरम्भत्वे विकारित्वमेवायाति। सत्स्वरूपस्यानन्तत्वे तस्मिन्नेव क्रियाया निरवच्छिदप्रकाशो न विक्रियां व्यनक्ति सतोऽविक्रियत्वेनावस्थानात्। अतएवाहाचार्य्यः—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (१०।४२) इति, "पादोऽस्य विश्वा भुवनानि" (ऋक्सं, १०म, ९०सू, ३ऋक्) इति च। सतः शक्तेश्च न भिन्नत्वमस्या अनन्तत्वात् सद्व्यापित्वाच्छक्तेरेव व्यक्ताव्यक्तव्यवस्थोचितत्वाच्च। अतएवाह श्रीमच्छङ्करः "कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यम्" (वे, सू, २अ, १पा, १८सू, भा) इति। सतो जगज्जीवाभिव्यक्तिर्ज्ञानमेव सूचयति। वेदान्तवादिनां ब्रह्मणश्चित्स्वरूपत्वे नास्त्यसम्मतिः। ज्ञेयं विना ज्ञानस्य स्थितिर्न सम्भवति; ज्ञानाज्ज्ञेयान्तरे स्वीकृते सर्व्वकारणस्य ज्ञानस्यान्यापेक्षित्वप्रसङ्गोऽतो न सिध्यति ज्ञानस्वरूपत्वं ब्रह्मण इत्यर्व्वाचां ज्ञेयाभावत्वेन ज्ञानस्यासम्भाव-

नेति विप्रतिपत्तिस्तस्य ज्ञानस्यात्मज्ञाने सर्व्वेषां ज्ञेयानामन्तर्भावितत्वात् निर्मूला। अव्यक्तानां ज्ञेयानां तस्मिन् ज्ञानेऽभिन्नभावेन स्थितिर्नानुभूतिविरुद्धा। यतोऽस्माकमपि ज्ञानेऽभिन्नभावेन स्थिताः शब्दार्थाः कार्य्यकाले बुद्धौ प्रतिभासन्ते न तु तत्पूर्व्वम्; न च पुनस्तेनास्माकं तज्ज्ञानवत्त्वाभावः। ज्ञानस्वरूपमधिकृत्याह च श्रीमच्छङ्करः—"आत्मनः स्वरूपं ज्ञप्तिर्न ततो व्यतिरिच्यतेऽतो नित्यैव तथापि बुद्धेरुपाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारपरिणामिन्या ये शब्दाद्याकारावभासास्ते आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एवात्मविज्ञानेन व्याप्ता उत्पद्यन्ते। तस्मादात्मविज्ञानावभासाश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्म्मा विक्रियारूपा इत्यविवेकिभिः परिकल्प्यन्ते। यत्तु ब्रह्मणो विज्ञानं तत्सवितृप्रकाशवदग्न्युष्णत्ववच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तत्, न तत्कारणान्तरसव्यपेक्षं नित्यस्वरूपत्वात्। सर्व्वभावानाञ्च तेनाविभक्तदेशकालत्वात्कालाकाशादिकारणत्वाच्च निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेयं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भविष्यद्वास्ति तस्मात् सर्व्वज्ञं तद्ब्रह्म। मन्त्रवर्णाच्च—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' इति। 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयोऽस्ति' इत्यादि श्रुतेश्च। विज्ञातृस्वरूपाव्यतिरेकात् करणादिनिमित्तानपेक्षत्वाच्च ब्रह्मणो ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिः।" इति। न तु पुनर्ज्ञानमिदमन्तर्विशिष्टं भवितुमर्हति, तथा सति ज्ञानस्याज्ञानयिमित्वमिवायाति। सच्च ज्ञानञ्च न भिन्ने, सदित्युक्ते ज्ञानस्यैव सत्त्वं नान्यस्य, यतः सतो जगदुत्पत्तौ नान्तरं सर्व्वत्र ज्ञानक्रियानुस्यूतत्वात्। अनन्तत्वन्तु सतो ज्ञानस्य च पूर्व्वमेव प्रतिपादितम्। एवं सत्यं ज्ञानमनन्तं न भिन्नस्वरूपमेकमेवेति सिद्धेऽन्येषामपि स्वरूपाणां तदभिन्नत्वमिति साधनं न दुष्करम्। ज्ञानमेव शिवम्, यतो जीवानां प्रयोजनानि जानाति ब्रह्म पूर्णज्ञानत्वात्, तत एवोत्पद्यन्ते तदायोजनानि च

पूर्ण्णमेव । अनन्तत्वेन हि तस्य प्रपञ्चातीतत्वमतो न पृथग्युक्तेरावश्य-
कता । ज्ञाने नाज्ञानस्यास्तित्वमतोऽस्य शुद्धत्वं स्वाभाविकमेव ।
अविनश्वरत्वं दुःखहेतुरतो विशुद्धत्वेऽस्य स्वाभाविकी सुखस्वरूपत्वमिति
एकस्यैव चित्स्वरूपस्य भिन्नदृष्ट्या दर्शनेन भिन्नस्वरूपवत्त्वेन प्रतीतिर्न
तु स्वरूपत एव भिन्नत्वम् ।

साधने प्रवृत्तस्य प्रथमं सत्तामात्रधारणं निर्व्विशेषवादस्य, सत्तायां
चित्स्वरूपस्य चित्स्वरूपस्य च शिवस्वरूपत्वेन शुद्धस्वरूपत्वेन सुख-
स्वरूपत्वेन दर्शनं सविशेषवादस्य च मूलम् । ब्रह्मणि सदैकरूपत्व-
मेव । साधकगतदृष्टिभेदात् यद्यपि भिन्नत्वेन प्रतिभाति तदेकमेव
स्वरूपम्, तथापि परब्रह्मणि नास्ति निर्व्विशेषसविशेषवादयोरव-
काशः । निर्व्विशेषसविशेषवादिभिर्यदा सच्चिदानन्दघनं ब्रह्मेति
स्वीकृतं, तदा निष्फल एव निर्व्विशेषसविशेषविचारः । साधूक्तवान्
श्रीमद्बलदेवः गोविन्दभाष्ये ( वे, सू, १।१।१० ) "सगुणं निर्गुणञ्चेति
द्विरूपता नास्ति ।" "ननु निर्गुणोऽपि गुणवानिति विरुद्धम् । मैवं
वस्तुस्वभावात् । तथाहि निर्गुणादयः शब्दाः नैर्गुण्यादिना निमि-
त्तेन तत्र प्रवर्त्तेरन् सर्व्वज्ञादयस्तु सर्व्वज्ञादिना । तेन प्राकृतैः सत्त्वादि-
भिर्गुणैर्विहीनः स्वरूपानुबन्धिभिस्तैस्तु विशिष्टोऽसाविति न कापि
विचिकित्सा ।" इति । सगुणनिर्गुणादिविरोधः पुनरीश्वरास्तित्वा-
स्वीकारकारणं कुतस्य—"तं नश्वरतोऽर्थवादिनः पुरुषं वदन्ति व्यापि
प्रदेशगतं शाश्वतमाहुरेके । मूर्त्तं न मूर्त्तं सगुणं गुणिनं तथैव कर्त्ता
न कर्त्ता इति चाप्यपरे ब्रुवन्ति ।" (न, वि, २१अ) इति । या तु
नारूपे तद्ब्रह्मणि नास्ति भक्तिः सम्भवतीति केषाञ्चिदुक्तिः, सा निरस्ता
सुष्ठु भगवद्भक्तिचन्द्रिकायां शाण्डिल्यसूत्रव्याख्यायां श्रीमता नारायण-
तीर्थेन —"ननु अस्मिन् मते कथं भगवति भक्तिः सम्भवति, नीरूपत्वेन
सौन्दर्य्याभावात् । रूपवत्त्वे तु अनित्यत्वदोषापत्तिभिया माहात्म्य-
ज्ञानस्य बाधेन सुतरामिति चेत् न, प्रकृत्यादिप्रवर्त्तकतया प्राकृतरूप-
शून्यत्वेऽपि सत्यज्ञानानन्दादिलक्षणरूपवत्त्वादेव सुन्दरतमे तस्मिन् भक्ति-

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।

सम्भवात्" इति। श्रीमद्बलदेव आह गोविन्दभाष्ये (वे, सू, १।१।२)
—"इत्थं हरेराक्षमूर्त्तित्वमनुभूतेरनुभवितृत्वं स्वाक्षकधर्म्माधिष्ठानत्वा-
श्रितत्वं जगत्कर्तृनिर्व्विकारत्वं चेत्यादि युगमागरूपतया चाक्षोपासनं
सिध्यति" इति। सत्यज्ञानानन्दे परब्रह्मणि पितृत्वादिसम्बन्धो न पुनः
काल्पनिकः। चित्स्वरूपस्य शिवस्य "येन जातानि जीवन्ति," "य
एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाणः" (कठ, ५।८),
"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्
(श्वे, उ, ६।१३)" इत्याद्यासु श्रुतिषु वर्णितेन पालनप्रयोजनार्पणादि-
व्यापारेण तत्तत्सम्बन्धस्य निरतिशयतात्त्विकत्वात्। "नित्यो नित्या-
नाम्" इत्यादि श्रुत्या परब्रह्मणा जीवस्य नित्यसम्बन्धत्वात् पितृत्वादि-
सम्बन्धो नित्य एव। जगत् सत्यं जीवो जीवभावेन नित्य इति
सिद्धान्तो येन बहु मन्यते, तेऽपि जीवेश्वरयोः सम्बन्धोऽनित्य इति वक्तुं
नोत्सहते। आह च श्रीमच्छङ्करः—"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी"
(१३।१९) इत्यत्र, "प्रकृतिं पुरुषञ्चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावु-
भावप्यनादी न विद्यते आदिर्ययोस्तावनादी नित्यत्वादीश्वरस्य तत्प्रकृ-
त्योरपि युक्तं नित्यत्वेन भवितुम्।" इति। स ईश्वरो यदा साधक-
स्यान्तश्चक्षुःपथगतः, तदा तं स त्वम्पदेन स्तौति, न यदान्तश्चक्षुर्गोचर-
स्तदा तत्पदेन। तत् स्तोत्रं प्रधानतः स्वरूपानुबन्ध्येव भवति, तद्यथा
—"नमाम सर्व्वं सर्व्वेशमनन्तमजमव्ययम्। लोकधामधराधारमप्रकाश-
मभेदिनम्॥ नारायणमणीयांसमशेषाणामणीयसाम्। समस्तानां
गरिष्ठं यद्भवादीनां गरीयसाम्॥" (वि, पु, १अं, ९अ, ३९।४०श्लो)
इति। अन्तश्चक्षुर्गोचरे त्वम्पदेन यथा—"कथयामि ततः किन्ते सर्व्वं
वेत्सि हृदि स्थितम्। सर्व्वात्मन् सर्व्वभूतेश सर्व्वसत्त्वसमुद्भव॥" (वि,
पु, १अं, १२अ, ७४श्लो) इति। ३।४।

यद्यक्षरोपासनेनापि परमपुरुषमेव प्राप्नोति साधकः, ततः कथं

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥
ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥

न सर्वे सर्वविकल्पवर्ज्जितं प्रथममक्षरं परमं ब्रह्मोपास्य तेन च परमपुरुषप्राप्तौ प्रयतन्ते ? तत्राह क्लेश इति। अव्यक्तासक्तचेतसाम् अव्यक्तेऽक्षरे परब्रह्मणि आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः। कथम् ? देहवद्भिः देहाभिमानवद्भिः दुःखं दुःखेन कृच्छ्रेण अव्यक्ता गतिः अव्यक्तविषया निष्ठा अवाप्यते प्राप्यते। सत्तामात्रमनुभवविषयं कर्त्तुं देहादिकं सर्वं चिन्तापथादपसारणीयम्। तत्तु देहाभिमानिभिरशक्यम्, यदि वा शक्यमत्यन्तक्लेशसाध्यम। अतः जगज्जीवयोः परेण सम्बन्धस्थितत्वादनपनीय तस्मिन् चित्तसमाधानं सुकरमिति तदेवानन्तरश्लोके उपदेक्ष्यत्याचार्य्यः। इममेवार्थं विष्णुपुराणमाह—"त्रिविधा भावना भूप विश्वमेतन्निबोध मे। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका॥ ब्रह्मभावात्मिका ह्येका सर्वभावात्मिका परा। उभयात्मिका तथैवान्या त्रिविधा भावभावना॥ सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः। कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः॥ हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा। बोधाधिकारयुक्तेषु विद्यते भावभावना॥ अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु। विश्वमेतत् परं चान्यत् भेदभिन्नदृशां नृप॥" (वि, पु, ६अं, ७अ, ४८—५२श्लो) इति। अत्र श्रीमच्छ्रीधरः—"ब्रह्मभावनावन्तोऽपि सनन्दनादयो जीवा एव देहानुसन्धाननिवृत्तेः" इति। "विश्वमेतत् परं चान्यत्" इति भेदज्ञानं न विलुप्यते, अतः "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥" (वि, पु, ६अं, ७अ, ५३श्लो) इत्येवं सत्तामात्रत्वेन ग्रहणं दुष्करमेव जीवानां देहाद्यनुसन्धानवतामिति भावः। ५।

विश्वमन्तस्यस्तुषस्तिरोधाय देहाद्यनुसन्धानवतां केवलायाः सत्ताया

**तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥७॥**

धारणं क्लेशकरमित्युक्त्वा जगज्जीवान्तर्यामित्वेन परब्रह्मणो धारणं जीवानां सुकरमिति पश्यन्नाह ये त्विति, तेषामिति । ये तु सर्व्वाणि कर्म्माणि मयि सर्व्वान्तर्यामिणि सन्न्यस्य समर्प्य मत्पराः सन्तः अनन्येन केवलेन ऐकान्तिकेनैव योगेन मां सर्व्वान्तर्यामिणं ध्यायन्तः उपासते,—एतेनोपासने योगत्रयसमन्वयनमुक्तम्,—मयि सर्व्वान्तर्यामिणि आवेशितचेतसां समाहितचित्तानां तेषामहं सर्व्वान्तर्यामी, हे पार्थ, मृत्युसंसारसागरात् मृत्युयुक्तात् संसारार्णवात् न चिरात् क्षिप्रमेव समुद्धर्त्ता सम्यगुद्धारकर्त्ता भवामि । स्वात्मन्यन्तर्यामिणं स्वात्मातीतं सर्व्वाणि भूतान्यात्मन्यन्तर्भूय वर्त्तमानं सत्यज्ञानादिस्वरूपिणं ज्ञानतापाप्तमुपासीनैः पुनः सत्तामात्रध्याननिरतानां द्वयोस्तारतम्यमृते नात्यन्तभेदः । ये त्वक्षरमनपेक्ष्य श्रेष्ठत्वेन भगवन्तं सर्व्वान्तर्यामिणं लोकातीतपुरुषविशेषाविर्भूतमर्च्चयन्तो वयं श्रेष्ठोपासका इति मन्यन्ते, न ते तत्त्वदर्शिनः, सत्तामात्रेऽनिवेशितचेतसां न परब्रह्मणि चित्तं स्थितिपदं लभते, तस्मिन्नेव हि स्वरूपवैशिष्ट्यमुपलब्धव्यम्, अतएवोक्तं विष्णुपुराणे, "अमूर्त्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः । समस्तशक्तयश्चैता नृप यत्र प्रतिष्ठिताः ॥" ( वि, पु, ६अं, ७अ, ६९श्लो ) इति । कारणे तस्मिन्नेकस्याः शक्तेर्विविधत्वेन प्रकाशमानाः शक्तयः कार्य्यस्यात्मभूताः । ये त्वक्षरमेव परमप्रापणीयं मन्यन्ते न तु परमपुरुषं तेऽपि न भवन्ति सम्यग्दर्शिनः, यतश्चित्सत्तया स्वात्मनो विविधसम्बन्धं परिजिहासतां तेषां तदसम्भवत्वात् मिथ्याचारत्वमेव विषमं फलम् । "आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः । तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥" ( शा, प, १८७अ, २४श्लो ) इति यदुक्तं तदात्मपरमात्मनोर्द्वैविकाय, प्राकृतैर्गुणैरविचाल्यस्य चात्मनः परमात्माधीनत्वेन तात्स्वरूप्येण कैवल्यसम्भावनाप्रदर्शनाय च । अक्षरशब्देन जीवश्चास्मिन् शास्त्रे नोपास्यत्वेन

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ॥८॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥९॥

गृहीतः स्वयमाचार्य्येण "अक्षरं परमं ब्रह्म" (८।३) इत्युक्तत्वात् "अव्यक्तोऽक्षर इत्युक्तः" (८।२१) इत्यत्र तस्यैव परामृष्टत्वात् । जीवत्वेनाक्षरस्याधःकरणमत एवात्र न न्याय्यम, "क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते" ( १५।१६ ) इत्यध्यायान्तरोदीरितप्रमाणबलात् । अयन्त्वन्य एव "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः" (१५।१८) इति, "मम योनिर्महद्ब्रह्म" (१४।३) इतिवद्विशेषवचनात् । ६।७ ।

यत एवं तस्मान्मय्येवेति । मयि सर्व्वान्तर्यामिणि मनः सङ्कल्पविकल्पात्मकम् स्थिरीकुरु, बुद्धिं व्यवसायात्मिकां मयि सर्व्वान्तर्यामिणि निवेशय स्थापय । एवं कृत्वा किं भविष्यति ? अत ऊर्द्ध्वं शरीरपातादनन्तरं मयि सर्व्वान्तर्यामिण्येव निवसिष्यसि निवासं करिष्यसि नात्र संशयः । यस्य हि शरीरपातात् पूर्व्वमेव परब्रह्मणि चित्ताभिनिवेशो जातः, स एव तस्मिन् निवत्स्यति नान्यः, चित्ताभिनिवेशानुसारत एव गतेरवश्यम्भावित्वात् । ८ ।

सर्व्वान्तर्याम्येव परमप्राप्य इति जानतोऽपि सर्व्वविधान् सङ्कल्पान् विहाय तस्मिन् मनसः स्थापनं बुद्धेरध्यवसायश्च सुदुष्कर इति तदशक्तस्य मम किं कर्त्तव्यं, तदेवाह अथेति । अथ यदि मयि सर्व्वान्तर्यामिणि स्थिरमचलं यथा स्यात् तथा चित्तं समाधातुं स्थापयितुं न शक्नोषि ततस्तर्हि अभ्यासयोगेन मत्तो निश्चलतो मनसो मयि पुनः पुनः स्थापनरूपेण मां सर्व्वान्तर्यामिणमाप्तुं प्राप्तुम् इच्छ प्रार्थी भव । "सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः । स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥" (भा, ५स्क, १९अ, २७श्लो) इति भगवत्प्राप्तीच्छूनामस्माकमभूतपूर्व्वा-

अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव ।
मदर्थमपि कर्म्माणि कुर्व्वन् सिद्धिमवाप्स्यसि ॥१०॥
अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः ।
सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥

ध्यासपरित्यागेन नूतनाभ्यासरतानां तत्प्राप्तिरेव भवति तं प्रति चित्तस्य लौल्यात् । ९ ।

पुनः पुनः सर्व्वान्तर्य्यामिणि निश्चलतया मनसः स्थापनमपि न सम्भवति, देहादिरक्षाव्यापारव्यापृतस्य ममेतुरुपायान्तरमाह अभ्यास इति । अभ्यासे मयि पुनः पुनश्चित्तस्थापनरूपे यदि असमर्थोऽशक्तोऽसि तर्हि मत्कर्म्मपरमः मामाश्रित्य यानि कर्म्माणि श्रवणकीर्त्तनादीनि तत्परमस्तदेकनिष्ठो भव । मदर्थं मामुद्दिश्य कर्म्माणि श्रवणकीर्त्तनादीनि कुर्व्वन् सिद्धिं मत्प्राप्तिरूपाम् अवाप्स्यसि प्राप्स्यसि । १० ।

तदशक्तस्य किं कर्त्तव्यं तदाह अथेति । अथ यदि मद्योगं मदेकशरणत्वं मयि सर्व्वान्तर्य्यामिणि कर्म्मार्पणरूपं योगं वा आश्रितः सन् एतत् श्रवणकीर्त्तनादिकं कर्त्तुमशक्तोऽसि, ततः तर्हि यतात्मवान् यतः संयतेन्द्रियः आत्मवान् विवेकी च सन् सर्व्वकर्म्मफलत्यागं कुरु फलाभिसन्धिं त्यज । ११ ।

एवं सर्व्वकर्म्मफलत्यागस्य सुकरत्वप्रतिपादनेन पूर्व्वोक्तेभ्य उपायेभ्यस्तस्य निकृष्टत्वमभिप्रेतमिति प्रतिपत्तिनिरसनायाहाचार्य्यः श्रेय इति । अभ्यासात् उपदेशजनितसम्यग्ज्ञानविरहितात् ज्ञानम् उपदेशजनितसम्यग्ज्ञानं श्रेयः प्रशस्यतरम् ; ज्ञानादुपदेशजनितसम्यग्ज्ञानात् ध्यानं तज्ज्ञानप्रत्यक्षीकरणार्थचिन्तनं विशिष्यते विशिष्टं भवति ; ईदृशाद्ध्यानात् कर्म्मफलत्यागः विशिष्यते विशिष्टो भवति । कथम् ? त्यागा-

४६

अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च ।
निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१३॥
सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥

दनन्तरं शान्तिरुपशमः । अभ्यासे प्रवृत्तानां यदान्तराया उपतिष्ठन्ते तदा तन्निवारणोपायाज्ञानात् यत्नशैथिल्यं जायते, अतो ह्यन्तरायनिरसनोपायज्ञानमभ्यासात् श्रेयः । अन्तरायनिरसनोपायज्ञाने सत्यपि यदि चिन्तनानुरता न भवेयुस्ते, तदोपायज्ञानं निरर्थकमेव स्यात्, अतो ज्ञानाद्ध्यानं विशिष्टं भवति । ध्यानशीलानामपि न जातु शान्तिरुपतिष्ठते यद्यनुष्ठीयमानेन ध्यानेनावान्तरसिद्धिलाभादात्माभिमानो जायते, तथा ह्याह पतञ्जलिः—"व्युत्थाने सिद्धयः समाधौ विघ्नाः (प, सू, ६।३।८) इति । सर्व्वथा कर्म्मत्यागं विना ध्यानजनितविघ्ना नापगच्छन्ति, अतो ध्यानात् कर्म्मफलत्यागस्य सर्व्वश्रेष्ठत्वम् । भगवति मनःसमाधानं बुद्धिनिवेशनञ्च कर्म्मफलाकाङ्क्षयाविशुद्धसत्त्वानां न सम्भवतः, अतः कर्म्मफलत्यागस्य सर्व्वेषूपायेषु साम्राज्यमिति न वृथा स्तुतिस्तस्य । निकृष्टत्वेन न तस्य सुकरत्वप्रदर्शनं, किन्तर्हि ततः साधकानां भगवत्प्राप्त्युद्देश्यानां साधनारम्भ इति तं परित्यज्य न कृतार्थतासम्भावनेति कर्म्मफलत्यागपूर्व्वकं यत् यत् साधनमुपदिष्टं तत्तत्साधनाशक्तौ सर्व्वसाधारणकर्म्मफलत्यागेन साधनमारम्भणीयमित्युपदेशः । अतो यथोक्तसाधकानां तथा भगवत्प्राप्तिकामानां निकृष्टानामपि साधकानां कर्म्मफलत्याग आश्रयणीय इति गीताशास्त्रसम्मतः पन्थाः । त्यागेनामृतत्वं प्राप्नुवन्तीति वेदान्तवादिनां मतमतएव समीचीनम् । १२ ।

त्यागादनन्तरमेव शान्तिरिति साधारणत उक्ता तन्मध्योदिताद्वेष्टृत्वादित्यागफलान्युपवर्णयन् त्यागस्य श्रेष्ठत्वं दर्शयत्याचार्य्योऽद्वेष्टेति सप्तभिः । अद्वेष्टृत्वादिधर्म्मसमूहोऽक्षरोपासकानामित्युक्तिस्तु न युक्त-

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्व्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥

यत्यानुसारिणी । सर्व्वभूतानामद्वेष्टा द्वेषविरहितः, मैत्रः मित्रतया वर्त्तत इति मैत्रः, करुणः कृपालुः—उत्तमेषु द्वेषशून्यः, समेषु मैत्रः, अधमेषु करुण इति यथायथं बोध्यम् ; निर्म्ममो ममेति प्रत्ययवर्ज्जितः, निरहङ्कारोऽभिमानशून्यः, समदुःखसुखः समे दुःखसुखे यस्य, क्षमी आक्रुष्टोऽभिहतो वा क्षमावान्, सततं नित्यं सन्तुष्टः लाभालाभे प्रसन्न-चित्तः, योगी समाहितचेताः, यतात्मा संयतस्वभावः, दृढ़निश्चयः दृढ़ः कुतर्कादिनानभिभवनीयो निश्चयो यस्य स्थिराध्यवसायः, मयि सर्व्वान्त-र्यामिणि,अर्पितमनोबुद्धिः अर्पिते मनोबुद्धी यस्य, मद्भक्तः मद्भजनशीलो यः स मे प्रियः । १३।१४ ।

यस्मादिति । यस्मात् लोको न उद्विजते नोद्वेगं प्राप्नोति, यः लोकात् न उद्विजते नोद्वेगं गच्छति, हर्षामर्षभयोद्वेगैः हर्षः प्रियलाभे प्रोत्फुल्लता, अमर्षः अभिलषितप्रतिघातेऽसहिष्णुता परस्य लाभेऽसहनं वा, भयं त्रासः, उद्वेगश्चित्तक्षोभः, एतैर्विमुक्तो यः स च मे प्रियः । १५ ।

अनपेक्ष इति । अनपेक्षः भोगनिरपेक्षः, शुचिः बाह्याभ्यन्तरशौच-सम्पन्नः, दक्षः उपस्थितेषु कर्त्तव्येषु ज्ञातव्येषु च सद्य एव कर्त्तुं ज्ञातुञ्च समर्थः, उदासीनः पक्षपातविरहितः, गतव्यथः आधिशून्यः, सर्व्वारम्भ-परित्यागी अहं करोमीत्यभिमानयुक्तान् सर्व्वानारम्भानुद्यमान् परि-त्यक्तुं शीलं यस्य सः—इहामुत्रफलभोगार्थानि कामहेतूनि कर्म्माणि समारभ्यास्तान् परित्यक्तुं शीलमस्येति श्रीमच्छङ्करः, शास्त्रीयकर्म्मव्यति-रिक्तसर्व्वकर्म्मारम्भपरित्यागीति श्रीमद्रामानुजः—मद्भक्तो मद्भजनशीलो यः स मे प्रियः । १६ ।

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्ज्जितः ॥१८॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१९॥
ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते ।

य इति। योऽभिलषितप्राप्तौ न हृष्यति, अनभिलषितप्राप्तौ न द्वेष्टि, प्रियवियोगे न शोचति, अप्राप्तमर्थं न काङ्क्षति, शुभाशुभपरित्यागी शुभं पुण्यमशुभं पापं ते शुभाशुभे परित्यक्तुं शीलं यस्य सः— इदं शुभमतएव करोमि इदमशुभमतएव न करोमीति निश्चयं परित्यज्य सर्व्वथा भगवत्प्रेरणानुसरणमेव यः करोतीत्यर्थः, न खलु वक्तव्यमेवं विचारशून्ये सति पापपुण्ययोः प्रभेदः सर्व्वथा विलुप्येत, भगवत्प्रेरणानुसरणे न जातु पापस्पर्शो भवेदिति तदनुसरणे भवति तस्याभिलाषः, भक्तिमान् भक्तियुक्तो यः स मे प्रियः। १७।

सम इति, तुल्येति। शत्रौ च मित्रे च समः एकरूपः, मानापमानयोरपि तथा समः हर्षविषादशून्यः, शीतोष्णसुखदुःखेषु समः, सङ्गवर्ज्जितः सर्व्वत्रासक्तिविरहितः, तुल्यनिन्दास्तुतिः तुल्ये निन्दास्तुती यस्य सः, मौनी संयतवाक्, येन केनचित् सन्तुष्टः यदृच्छालाभपरितुष्टः, अनिकेतः नियतवासशून्यः निकेतादिष्वसक्त इत्यनिकेत इति श्रीमद्रामानुजः, स्थिरमतिर्व्यवस्थितचित्तः, भक्तिमान् भक्तियुक्तः यः स मे प्रियः। १८।१९।

स्थितप्रज्ञतायामात्मन्येव स्थितिरभिहिता, द्वितीयषट्कान्तेऽत्र तु सर्व्वान्तर्यामिण्यनन्याभिलाषत्वेन मनोबुद्धी समर्प्पयतो ये धर्म्माः स्थितप्रज्ञत्वमन्तर्भूयोपतिष्ठन्ते तानुक्तोपसंहरति ये त्विति। ये तु

श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः।

श्रद्दधानाः श्रद्धां कुर्व्वन्तो मत्परमा अहं सर्व्वान्तर्यामेव परमो निरतिशयः प्राप्यो येषां ते, भक्ता भजनशीलाः सन्तः यथोक्तमिदं धर्म्म्यामृतं धर्म्ममेवामृतं पर्य्युपासतेऽनुतिष्ठन्ति ते मेऽतीव प्रियाः। तात्पर्य्यमुक्तमध्यायस्य श्रीमच्छ्रिरिणा—"सोपाधिकाभिध्यानपरिपाकान्निरुपाधिकमनुसन्धानस्याद्वेष्टा सर्व्वभूतानामित्यादिधर्म्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणाद्यावर्त्तयतस्तत्त्वसाक्षात्कारसम्भवात् ततो मुक्त्युपपत्तेस्तद्धेतुवाक्यार्थधीविषयोऽन्वययोग्यस्तत्पदार्थोऽनुसन्धेयः" इति। श्रीमच्छ्रीधरेण तु—"दुःखमव्यक्तवर्त्मनद्बहुविघ्नमतो बुधः। सुखं कृष्णपदाम्भोजं भक्तिमत्पथवान् भजेत्॥" इति। श्रीमन्मधुसूदनस्तु स्वसम्प्रदायमनुसृत्य—"सोपाधिकब्रह्मध्यानपरिपाकात् निरुपाधिकं ब्रह्मानुसन्धानस्याद्वेष्टृत्वादिधर्म्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणमनननिदिध्यासनान्यावर्त्तयतो वेदान्तवाक्यार्थतत्त्वसाक्षात्कारसम्भवात् ततो मुक्त्युपपत्तेर्मुक्तिहेतुवेदान्तमहावाक्यान्वययोग्यस्तत्पदार्थोऽनुसन्धेय इति मध्यमषट्केन प्रसिद्धम्" इति। २०।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये द्वादशोऽध्यायः।

———

## त्रयोदशोऽध्यायः ।

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥१॥

एवं प्रथममध्यमयोः षट्कयोरुपासकस्यात्मन उपास्यस्य च परमात्मनस्तत्त्वं पूज्यपूजकप्रयोज्यप्रयोजकत्वसम्बन्धञ्च सहोपायेनाभिधाय तयोः कर्म्मादीनाञ्च विशेषज्ञानं विज्ञानमूलकमवतारयितुमन्तिमषट्कस्यारम्भः । प्रकृतिः पुरुषः परमात्मेति तत्त्वत्रयं सर्व्वज्ञानमूलमिति तदेवास्मिन्नध्याये प्रथममुच्यत आचार्य्येण । अत्र श्रीमच्छङ्कर आह,—"सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य—त्रिगुणात्मिकाष्टधा भिन्नाऽपरा संसारहेतुत्वात्, परा चान्या जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मिका, याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्द्धारणार्थं क्षेत्राध्याय आरभ्यते" इति ; श्रीमद्गिरिराह—"प्रथममध्यमयोः षट्कयोस्त्वंतत्पदार्थावुक्तौ, अन्तिमस्तु षट्को वाक्यार्थनिष्ठः सम्यग्धीप्रधानोऽधुनारभ्यते" इति ; श्रीमद्रामानुज आह—"पूर्व्वस्मिन् षट्के परमप्राप्यस्य परस्य ब्रह्मणो वासुदेवस्य प्राप्त्युपायभक्तिरूपभगवदुपासनाङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनं ज्ञानयोगकर्म्मयोगलक्षणनिष्ठाद्वयसाध्यमुक्तम् । मध्यमे च परमप्राप्यभूतभगवत्तत्त्वयाथात्म्यतन्माहात्म्यज्ञानपूर्व्वकैकान्तिकात्यन्तिकभक्तियोगनिष्ठा प्रतिपादिता, अतिशयैश्वर्य्यापेक्षाणामात्मकैवल्यमात्रापेक्षाणाञ्च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम् । इदानीमुपरितनषट्के प्रकृतिपुरुषतत्संसर्गरूपप्रपञ्चेश्वरतत्त्वयाथात्म्यकर्म्मज्ञानभक्तिस्वरूपतदुपादानप्रकाराश्च षट्कद्वयोदिता विशोध्यन्ते । तत्र तावत्त्रयोदशे देहात्मनोः स्वरूपं देह-

याथात्म्यशोधनं देहवियुक्तात्मप्राप्त्युपायं विविक्तात्मस्वरूपसंशोधनं तथाविधस्यात्मनश्चाचित्सम्बन्धहेतुस्ततो विवेकानुसन्धानप्रकाराश्चोच्यन्ते" इति ; श्रीमन्माध्व आह—"पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विशेष्य दर्शयत्यनेनाध्यायेन" इति ; श्रीमच्छ्रीधर आह—"भक्तानामहमुद्धर्त्ता संसारादित्यवादि यत्। त्रयोदशेऽथ तत्सिद्धौ तत्त्वज्ञानमुदीर्य्यते॥ 'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ' इति पूर्व्वं प्रतिज्ञातम्। न चात्मज्ञानं विना संसारोद्धरणं सम्भवतीति तत्त्वज्ञानोपदेशार्थं प्रकृतिपुरुषविवेकाध्याय आरभ्यते। तत्र यत्सप्तमाध्याये अपरा परा चेति प्रकृतिद्वयमुक्तं ययोरविवेकाज्जीवभावमापन्नस्य चिदंशस्यायं संसारः, याभ्याञ्च जीवोपभोगार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिः, तदेव प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञपदवाच्यं परस्परविभक्तं तत्त्वतो निरूपयिष्यन् श्रीभगवानुवाच" इति ; श्रीमद्बलदेव आह—"आद्यषट्के निष्कामकर्म्मसाध्यं जीवात्मज्ञानं परमात्मज्ञानोपयोगितया दर्शितम्। मध्यमषट्के तु भक्तिशब्दितं परमात्मोपासनं तन्महिमनिगदपूर्व्वकमुपदिष्टम्। तच्च केवलं तद्व्यञ्जकं सत् तत्प्रापकम्। आर्त्तादीनान्तु तमुपासीनानामार्त्तिहिनाशादिकरं तदेकान्तिप्रसङ्गेन केवलं सत् तत्प्रापकञ्च। योगेन ज्ञानेन चोपसृष्टं त्वैश्वर्य्यप्रधानतद्रूपोपलम्भकं मोचकञ्चेत्युक्तम्। तथाक्तिमस्यषट्के प्रकृतिपुरुषतत्संयोगहेतुकजगत्तदीश्वरस्वरूपाणि कर्म्मज्ञानभक्तिस्वरूपाणि च विविच्यन्ते। तत्र त्रयोदशेऽस्मिन्नध्याये देहजीवपरेशस्वरूपाणि विवेचनीयानि देहादिविविक्तस्यापि जीवात्मनो देहसम्बन्धहेतुस्तद्विवेकानुसन्धिप्रकारश्च विमर्शनीयः" इति ; श्रीमज्जीवकच्छ आह—"'यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्' इति श्रुतेर्विद्यावस्थायां भेदाभावेऽपि, अविद्यावस्थायाम् 'अन्तःप्रविष्टः शास्ता जनानाम्,' 'एष ह्येव साधु कर्म्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते' इति व्यवहारदशायां शास्यशासितृभावेन कर्त्तृकारयितृभावेन प्रसक्तस्य जीवेश्वरयोर्भेदस्य निरासार्थत्वादुत्तरग्रन्थस्यारम्भः" इति ;

क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

श्रीमद्विश्वनाथ आह—"तदेवं द्वितीयेन षट्केन केवलया भक्त्या भगवत्प्राप्तिः, ततोऽन्या अहंग्रहोपासनाद्यास्तिस्र उपासनाश्चोक्ताः । अथ प्रथमषट्कोदितानां निष्कामकर्म्मयोगिनां भक्तिमिश्रज्ञानादेव मोक्षस्तस्य ज्ञानं सङ्क्षेपादुक्तमपि पुनः क्षेत्रक्षेत्रज्ञादिविवेचनेन विवरितुं तृतीयं षट्कमारभते" इति । प्रकृतिः पुरुषः परमात्मेति तत्त्वत्रयं प्रथयताचार्य्येण मतविरोधी नहि युक्तनमः, यतः प्रकृतिर्माया चाविद्येति प्रख्यानेन न भवति प्रकृतितत्त्वस्य निरसनं परस्य शक्तित्वेन तस्य ग्रहणस्यापरिहार्य्यत्वात् । जीवतत्त्वस्य च—"अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते । नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ॥" इति तत्स्वरूपेण "ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते । सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥" इति परमात्मस्वरूपैक्यात् न सम्भवति तयोर्भेदः, न च पुनर्द्वयोः सर्व्वगतत्वं सम्भवति अन्योन्यव्याहतत्वेनासर्व्वगतत्वापत्तेः, अपिच तत्तदात्मगतविशेषाः सन्तीति प्रमाणाभावात् इत्युक्त्या—न चाग्रहणमुपपद्यते यतः सर्व्वगतत्वेऽपि नास्ति सर्व्वातीतत्वं तस्य जीवतत्त्वस्य, तत्तु परस्यैवेति विशेषः, "द्वा सुपर्णा"इत्यादिश्रुतिषु तत्तदात्मगतविशेषाणाञ्च श्रवणात् न च तत्र प्रमाणाभावः । एवं तत्त्वत्रयस्य सिद्धत्वात् तदेव वक्तमुपक्रमते इदमिति । हे कौन्तेय, इदं भोगायतनं शरीरं क्षेत्रं—क्षतत्राणात् क्षयात् क्षरणात् क्षेत्रवद्वास्मिन् कर्म्मफलनिवृत्तेः क्षेत्रमिति श्रीमच्छङ्करः—इत्यभिधीयते कथ्यते । एतत् क्षेत्रं यो वेत्ति ममेदमिति जानाति तद्विदः क्षेत्रक्षेत्रज्ञविदः तं क्षेत्रज्ञमिति प्राहुः । १ ।

देहजीवयोर्निर्वचनानन्तरं परमात्मा निरूप्यते क्षेत्रज्ञमिति । हे भारत, सर्व्वक्षेत्रेषु मां सर्व्वान्तर्य्यामिणमपि च क्षेत्रज्ञं विद्धि । जीवस्य हि स्वस्य देहविषयकं परिमितं ज्ञानं सम्भवति, न पुनस्तदन्येषां

देहानां, स्वदेहनियन्तृत्वमपि जीवस्य परिमितमेव, किमु वक्तव्यमन्येषां देहानां नियन्तृत्वमस्ति तस्येति, सर्व्वेषां देहानां ज्ञानं नियन्तृत्वञ्च परमात्मन एव, अतः स एव सर्व्वक्षेत्राणां क्षेत्रज्ञः । एवं तस्य क्षेत्रज्ञत्वे सिद्धे क्षेत्रक्षेत्रज्ञयोर्यत् ज्ञानं सर्व्वेषां क्षेत्राणां क्षेत्रज्ञः परमात्मेति यत् ज्ञानं तत् ज्ञानं मम सर्व्वान्तर्यामिणो मतम् अभिप्रेतम् । प्रथमन्तावद्देहस्य चात्मनश्च ज्ञानं जीवस्योत्पद्यते, तदनन्तरं स्वस्यासर्व्वज्ञत्व-परिमितत्वज्ञानेन सर्व्वज्ञस्यापरिमेयस्य परमात्मनो ज्ञानं तस्मिन् प्रादुर्भवति । अतः प्रकृतिपुरुषविवेकप्रधानस्य सांख्यशास्त्रस्य प्रथमसोपानत्वम्, तस्मिन्नारूढ़स्य ततः परमात्मज्ञानं स्वत उपतिष्ठते, अतएवाचार्य्यैः—क्षेत्रक्षेत्रज्ञयोर्ज्ञानं मम ज्ञानमिति ।

अथोऽस्मिन् 'क्षेत्रज्ञञ्चापि मां विद्धि' इत्युक्त्या अत्र जीवेशयोर्नास्ति भेदः, भेदस्त्वज्ञानकृत इति सिद्धान्तः स्वयमाचार्य्यस्य वचनैर्निरूप्यते, तद्यथा—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ॥ एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव ॥" (७।४—७) ; "सर्व्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥" (९।७।८) ; "मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते ॥" (९।१०) ; प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥" (१३।१९।२०) ; "उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥" (१३।२२) ; "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः

सर्व्वभूतानां ततो भवति भारत ॥" (१४।३); "ममैवांशो जीवलोके जीवभूतः सनातनः ।" (१५।७); "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः ॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मिन् लोके वेदे च प्रथितः पुरुषोत्तमः ॥" (१५।१६—१८) इति ।

पद्यमिदं श्रीमच्छङ्करेणैवं व्याख्यातम्—"क्षेत्रज्ञं यथोक्तलक्षणञ्चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि, योऽसौ सर्व्वक्षेत्रेष्वेकः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्य्यन्तानेकक्षेत्रोपाधिप्रविभक्तः, तं निरस्तसर्व्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः, हे भारत, यस्मात् क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति तस्मात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यत् ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तत् ज्ञानं सम्यक् ज्ञानमिति मतमभिप्रेतमित्यभिप्रायो ममेश्वरस्य विष्णोः" इति; श्रीमद्रामानुजेन—"देवमनुष्यादिसर्व्वक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं मां विद्धि 'क्षेत्रज्ञं चापी'त्यपिशब्दात् क्षेत्रमपि मां विद्धीत्युक्तमित्यवगम्यते । यथा क्षेत्रं क्षेत्रज्ञैकविशेषणस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्द्दिष्टं तथा क्षेत्रं क्षेत्रज्ञञ्च मद्विशेषणैकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्द्दिश्याविति हि वक्ष्यते । क्षेत्रज्ञात् बद्धमुक्तोभयावस्थात् क्षरादक्षरशब्दनिर्द्दिष्टादर्थान्तरत्वं परस्य ब्रह्मणो वासुदेवस्य '[illegible]मः पुरुषस्त्वन्यः' इति । पृथिव्यादिसङ्घातरूपस्य भगवच्छरीरत्वैकस्वभावतया भगवदात्मकत्वम्·········सामानाधिकरण्येन व्यपदिशति ।" इति; श्रीमद्बलदेवेन "हे भारत, सर्व्वक्षेत्रेषु माञ्च क्षेत्रज्ञं विद्धि । अपिरवधारणे । जीवाः स्वं स्वं क्षेत्रं स्वभोगमोक्षसाधनं जानन्तः क्षेत्रज्ञाः प्रजावत्; अहन्तु सर्व्वेश्वर एक एव सर्व्वाणि तानि नियम्यानि भर्त्तव्यानि च जानन् तत्सर्व्वक्षेत्रज्ञो राजवदित्यर्थः । सर्व्वेश्वरस्यापि क्षेत्रज्ञत्वम्—'क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभे ।

**तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥**
**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥**

तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते' इत्यादिस्मृतिभ्यः । किं ज्ञानमित्यपेक्षायामाह क्षेत्रेति । क्षेत्रेण सहितौ क्षेत्रज्ञौ जीवपरौ क्षेत्रक्षेत्रज्ञौ, तत्सहितयोस्तयोर्मिथो विवेकेन यज्ज्ञानं तदेव ज्ञानं मम मतं ततोऽन्यथा त्वज्ञानमित्यर्थः'' इति । एकात्मवादखण्डनायाञ्च यदुक्तं श्रीमद्रामानुजप्रभृतिभिः, तदुद्धरणेनालम्, तदर्थमाचार्य्यवचनोद्धरणसमयत्वादस्माकम् । २ ।

सङ्क्षेपेणोक्तमर्थं विशदयितुमाह तदिति । तत् क्षेत्रं शरीरं यच्च यद्द्रव्यं, यादृक् च इच्छादिधर्म्मकम्, यद्विकारि यैर्विकारैरिन्द्रियादिभिर्युक्तम्, यतश्च कारणात् यत् स्थावरजङ्गमादिभेदैर्भिन्नं कार्य्यम् । स च क्षेत्रज्ञः जीवलक्षणः परेशलक्षण इति श्रीमद्बलदेवः—यः यत्स्वरूपः यत्प्रभावः यच्छक्तिकः, तत्समासेन सङ्क्षेपेण सङ्कलितसारेण मे मत्तः शृणु । ३ ।

क्षेत्रक्षेत्रज्ञयोस्तत्त्वस्य ऋषिपरम्परागतत्वमाह ऋषिभिरिति । ऋषिभिर्मन्त्रद्रष्टृभिः विविधैश्छन्दोभिः ऋग्भिर्बहुधा कः पुरुषो हिरण्यगर्भ इत्यादि बहुप्रकारेण पृथक् गीतम् । ब्रह्मसूत्रपदैश्च—ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानीति श्रीमच्छङ्करः, ब्रह्मप्रतिपादकसूत्राख्यपदैः शारीरकसूत्रैरिति श्रीमद्रामानुजः, ब्रह्मसूत्राणि शारीरकमिति श्रीमन्माध्वः, ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि—'यतो वा इमानि भूतानि जायन्ते' इत्यादीनि तटस्थलक्षणपराणि उपनिषद्वाक्यानि ; तथा ब्रह्म पद्यते साक्षाज्ज्ञायते एभिरिति पदानि स्वरूपलक्षणपराणि—'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि च तैरिति श्रीमच्छ्रीधरः, ब्रह्मसूत्ररूपैः पदै-

र्वाक्यैरिति श्रीमद्बलदेवः, ब्रह्मणः सूचकानि पदानि समुच्चितवाक्यभावमापन्नानि तैर्ब्रह्मसूचकैर्ब्राह्मणवाक्यैरिति श्रीमन्नीलकण्ठः—बहुधा गीतम् ; विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया निश्चितप्रत्ययोत्पादकैर्हेतुमद्भिः वाक्यैरिति शेषः—ब्रह्मसूत्रपदैरित्यस्य वा विशेषणम्—'सदेव सोम्येदमग्र आसीत्' (छा, उ, ६।१), 'कथमसतः सज्जायेत' (छा, उ, ६।२), 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' (तै, उ, २।८) इत्यादिभिर्बहुधा गीतम् । तत् ऋषिभिरिति पूर्वेण सम्बन्धः । ब्रह्मसूत्रपदैरित्युक्तेर्भारतयुद्धात् प्राक् महर्षिवेदव्यासेन शारीरकसूत्राणि विरचितानीति प्रतीयते । महाभारतव्याख्यात्रा श्रीमता नीलकण्ठेनायं पक्षो न समाद्रियत इति प्रतिभाति तद्व्याख्यानेन । श्रीमद्द्वैपायनादिभिर्नूतनमार्गप्रवर्त्तकत्वेनाचार्यैः परिगृहीतः व्याख्यातश्च तस्य तन्मार्गो बहुधा । सोऽपि तेषां गौरववृद्धये प्रायतत । तथाहि शान्तिपर्व्वणि "स्वयं किमर्थन्तु भवान् श्रेयो न प्राह पाण्डवम् । किन्ते विवक्षितञ्चात्र तदाशु वद माधव ॥" इत्युक्ते भीष्मे स प्राह—"आधेयन्तु मया भूयो यशस्तव महाद्युते । ततो मे विपुला बुद्धिस्त्वयि भीष्म समर्पिता ॥ यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा । तावत्तवाक्षया कीर्त्तिर्लोकाननुचरिष्यति ॥ यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते । वेदप्रवाद इव ते स्थास्यते वसुधातले ॥" (शा, प, [illegible] २७—२८ श्लो) इति । यदि श्रीमद्द्वैपायनस्य यशसे तत्प्रणीतं [illegible] मेवात्रोद्घोषितवानाचार्यैः, तदपि न चित्रं नित्यपरगौरववर्द्धन[illegible]सुकस्य तस्य । श्रीमन्नीलकण्ठस्तु यं पक्षमाश्रितवान् न स सम्यगयुक्तः, यतो वर्त्तमानब्रह्मसूत्रग्रन्थ विविधानामाचार्य्याणां मतसंग्रहो दर्शयति, आसन् तस्य पूर्व्वं वेदान्तमीमांसका बहवो ग्रन्था इति, येषामुक्तिर्लोऽस्मिन् पक्षे दृश्यते । श्रीमद्द्वैपायनस्त्वाचार्य्यप्रदर्शितमार्गेण वेदान्तवाक्यानि मीमांसमानो यं सूत्रग्रन्थं प्रणीतवान् तेनान्ये सूत्रग्रन्थाः पाणिनिप्रणीतशब्दानुशास[illegible] [illegible]शब्दानुशासनानीव विलुप्तप्रचारा इति सुधीभिर्विवे[illegible] [illegible] [illegible]पायनमाचा-

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥५॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥

ऋषेस्तिरोधानानन्तरमप्यभूत्, दर्शयति तत् शतपथब्राह्मणम्—"एतेन ह वा इन्द्रोतो दैवापः शौनकः । जनमेजयं पारिक्षितं याजयाञ्चकार । तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते । तदेतद्गाथयाभिगीतम्—'आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् । अबध्नादश्वं सारङ्गं देवेभ्यो जनमेजयः ॥' इति ।" ( श, प, ब्रा, १३।८।४।१।२ ) इति । ४ ।

तत् क्षेत्रस्वरूपमाह द्वाभ्यां महाभूतानीति । महाभूतानि क्षित्यादीनि क्षेत्रारम्भकद्रव्याणि, तत्कारणमहङ्कारोऽहंप्रत्ययः, अहङ्कारकारणं बुद्धिः, बुद्धेः कारणमव्यक्तं मूलप्रकृतिः । क्षेत्राश्रितानीन्द्रियाणि दश—वाक्पाण्यादीनि पञ्च कर्म्मेन्द्रियाणि, चक्षुःश्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि, एकञ्च मनः, पञ्च चेन्द्रियगोचरा इन्द्रियप्रत्यक्षास्तन्मात्ररूपाः शब्दादयो विषया आकाशादिविशेषगुणतया व्यक्ताः । एतत्सांख्योक्तचतुर्विंशतितत्त्वात्मकं क्षेत्रम् । यदत्र विशेषवक्तव्यमस्त्युक्तं तत् सप्तमस्य चतुर्थश्लोके । अतोक्तं श्रीमन्नीलकण्ठेन—"एतान्येव सांख्यैश्चतुर्विंशतितत्त्वानि गण्यन्ते । एतावांस्त्वस्माकं विशेषः—तैः स्वतन्त्रा सत्या च प्रकृतिरुच्यते, अस्माभिर्मायारूपा मिथ्या ईश्वराधीना चोच्यत इति ; तथा च श्रुतिः—'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति । तस्मात् सांख्यप्रक्रिया भगवताश्रितेति न भ्रमितव्यम्" इति । प्रकृतिरीश्वराधीना सत्या तदभिन्नेति शास्त्रस्यास्य सिद्धान्तः । ५ ।

एवं यदात्मकं क्षेत्रं तदुक्त्वा क्षेत्राश्रिता मनोवृत्तीराह इच्छेति । इच्छा स्पृहा, द्वेषो विरागः, सुखं सुखानुभवः, दुःखं दुःखानुभवः,

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥७॥**

सङ्घातः देहेन्द्रियाणां संहतिः, चेतना सुखदुःखानुभवशक्तिः, धृतिर्धारणाशक्तिः, एतत् सविकारम् इन्द्रियविकारसहितं क्षेत्रं समासेन सङ्क्षेपेण उदाहृतम् । इच्छादयो देहधर्म्मा न त्वात्मधर्म्मा इति सिद्धान्तं नैयायिका न बहु मन्यन्ते, तेषां मते आत्मधर्म्मा एवैते । अर्व्वाचीनानामपि नैयायिकमते सम्मतिः । अत्रेदं विचार्य्यम्—सुखमनुभूय तत्र स्पृहा उदेति । यत्र विषयेन्द्रिययोगात् सुखानुभवः, तत्र स दैहिक एव न त्वात्मिकः । न खलु वक्तव्यम्—ब्रह्मसंस्पर्शसुखानुभूतिरपि दैहिकत्वेन ग्राह्या देहे तज्जनिताश्रुपुलकादिदर्शनादिति । दैहिकसुखानुभवे बाह्यविषयः प्रथमं देहं सविकारं करोति, तेन च विकारेण सुखमनुभवति मनः ; ब्रह्मसंस्पर्शसुखे तु ब्रह्मस्वरूपं प्रथममात्मानुभवति, तदनुभूतिर्देहस्याश्रुपुलकादिविकारान् जनयति, अतएवाध्यात्मिकमेव तत्सुखम् । यदोदेति विषयसुखे स्पृहा, तदा सा देहधर्म्म एव ; ब्रह्मसंस्पर्शसुखमनुभूय या स्पृहा [illegible] वर्द्धते सात्मधर्म्म [illegible]
एवं ब्रह्मयोगविरोधिनि पापि विद्वेषो [illegible] न [illegible]
एव । "ब्रह्मसंस्पर्शमत्यन्तसुखमश्नुते" ( [illegible] र्पित [illegible],
(८।७), "मन्मनाः" (९।३४) इत्यादिषु [illegible] नुभूतिः, [illegible]
पितमनोबुद्धित्वात् तद्वृत्तयो विशुद्धाः चैता [illegible]गतत्वादात्मन [illegible]
अन्यथा "यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः" (छा, उ, ८।५।६।१२), "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृ, आ, उ, ६।३।२३) इत्याद्याः श्रुतयः प्रकुप्येयुः । एवं विषयविभागतो नैयायिकं मतं समञ्जसं भवति । ६ ।

देहाभिनिवेशत्यागेन परमात्मन्यभिनिविष्टचित्तस्यात्मज्ञानमुत्पद्यते तदेवास्य दिव्यमानसचक्षुर्दिव्या बुद्धिरतस्तदुपयोगीनि साधनानि वक्तुमुपक्रमते अमानित्वमिति पञ्चभिः । अमानित्वमात्मश्लाघाराहित्यम्—

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥

उत्कृष्टजनेष्ववधीरणरहितत्वमिति श्रीमद्रामानुजः, स्वसत्कारानपेक्षत्वमिति श्रीमद्बलदेवः, विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघनं मानित्वं तस्य विवर्ज्जनमिति श्रीमन्मधुसूदनः; अदम्भित्वम् स्वधर्म्मप्रकटीकरणाभावः—धार्म्मिकत्वयशःप्रयोजनतया धर्म्मानुष्ठानं दम्भस्तद्रहितत्वमिति श्रीमद्रामानुजः, आत्माख्यत्वं ख्यात्वापि महत्त्वप्रदर्शनं दम्भ इति श्रीमन्माध्वः; अहिंसा वाङ्मनःकायैः प्राणिनामपीड़नम्; क्षान्तिः परैः पीड्यमानोऽपि तान् प्रत्यविकारचित्तत्वम् अपराधसहनम्; आर्ज्जवमकौटिल्यमक्रूरत्वम्—मनोवाक्कायकर्म्मणामवैपरीत्यमिति श्रीमन्माध्वः; आचार्य्योपासनम् आचार्य्यसेवा उपदेष्टुरानुगत्यम्; शौचमन्तर्बाह्यमालिन्यापनयनं—मृज्जलाभ्यां बाह्यं रागादिप्रतिपक्षभावनयान्तरमिति भेदः—आत्मज्ञानतत्साधनयोग्यत्वं मनोवाक्कायगतं शास्त्रसिद्धमिति श्रीमद्रामानुजः, बाह्याभ्यन्तरपावित्र्यमिति श्रीमद्बलदेवः; स्थैर्य्यम्—स्थिरभाव इति श्रीमच्छङ्करः, अध्यात्मशास्त्रोदितेष्वर्थेषु निश्चलत्वमिति श्रीमद्रामानुजः, सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता इति श्रीमच्छ्रीधरः, मोक्षसाधने प्रवृत्तस्यानेकविघ्नप्राप्तावपि तदपरित्यागेन पुनः पुनर्यत्नाधिक्यमिति श्रीमन्मधुसूदनः; आत्मविनिग्रहः आत्मसंयमः—आत्मन उपकारकस्यात्मशब्दवाच्यस्य कार्य्यकारणसङ्घातस्य विनिग्रहः स्वभावेन सर्व्वतः प्रवृत्तस्य सन्मार्गे एव निरोध इति श्रीमच्छङ्करः, आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्त्तनमिति श्रीमद्रामानुजः, शरीरसंयम इति श्रीमच्छ्रीधरः, आत्मानुसन्धिप्रतीपाद्विषयान्मनसो नियमनमिति श्रीमद्बलदेवः, आत्मनो देहेन्द्रियसङ्घातस्य स्वभावप्राप्तां मोक्षप्रतिकूले प्रवृत्तिं निरुध्य मोक्षसाधन एव व्यवस्थापनमिति श्रीमन्मधुसूदनः, देहेन्द्रियादिप्रचारसङ्कोच इति श्रीमन्नीलकण्ठः । ७ ।

इन्द्रियार्थेष्विति । इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु वैराग्यं

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥

रागाभावः—आत्मव्यतिरिक्तेषु विषयेषु दोषानुसन्धानेनोद्वेजनमिति श्रीमद्रामानुजः, शब्दादिषु प्रतीपेषु वैराग्यं रागाभाव इति श्रीमद्बलदेवः ; अनहङ्कारः अभिमानशून्यता—अनात्मनि देहे आत्माभिमानरहितत्वम्, प्रदर्शनार्थमिदम्—आत्मीयेष्वात्मीयाभिमानरहितत्वञ्चापि विवक्षितम् इति श्रीमद्रामानुजः, देहादिष्वात्माभिमानत्याग इति श्रीमद्बलदेवः, आत्मश्लाघनाभावेऽपि मनसि प्रादुर्भूतोऽहं सर्व्वोत्कृष्ट इति गर्व्वोऽहङ्कारः, अयोगव्यवच्छेदार्थ एवकारः समुच्चयार्थश्चकारः—तेनामानित्वादीनां विंशतिसंख्यकानां समुच्चितयोग एव ज्ञानमिति प्रोक्तं न त्वेकस्याभाव इति श्रीमन्मधुसूदनः ; जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु दोषानुदर्शनं पुनः पुनरालोचनम्—शरीरत्वे जन्ममृत्युजराव्याधिदुःखरूपस्य दोषस्यावर्ज्जनीयत्वानुसन्धानमिति श्रीमद्रामानुजः । ८ ।

असक्तिरिति । असक्तिः सक्तिः आसक्तिः निषिद्धेषु विषयेषु प्रीतिस्तदभावोऽसक्तिः, आत्मव्यतिरिक्तविषयेषु सङ्गरहितत्वमिति श्रीमद्रामानुजः, ममेदमित्येतावन्मात्रेण प्रीतिः तद्राहित्यमिति श्रीमन्मधुसूदनः ; पुत्रदारादिष्वनभिष्वङ्गः अन्यस्मिन्नात्मभावलक्षणोऽभिष्वङ्गः अन्यस्मिन् सुखिनि अहमेव सुखी अन्यस्मिन् दुःखिनि चाहमेव दुःखीति भावः, पुत्रदारादिषु तादृशभावस्याभावः,—पुत्रदारगृहादिषु शास्त्रीयकर्म्मोपकरणत्वातिरेकेण श्लेषरहितत्वम् इति श्रीमद्रामानुजः, सक्तिः स्नेहः स एवातिप्रकर्षोऽभिष्वङ्ग इति श्रीमन्माध्वः इष्टानिष्टोपपत्तिषु इष्टानामनुकूलानामनिष्टानां प्रतिकूलानाञ्चोपपत्तयः प्राप्तयस्तासु नित्यं सर्व्वदा समचित्तत्वं हर्षविषादरहितत्वम् । ९ ।

मयीति । मयि सर्व्वान्तर्यामिणि अनन्ययोगेन एकान्तिकत्वाभि-

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥**

नियोगेन—नान्यो भगवतो वासुदेवात् परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेनेति श्रीमच्छङ्करः, एकान्तयोगेनेति श्रीमद्रामानुजः, सर्वात्मदृष्ट्येति श्रीमच्छ्रीधरः, एकान्तिकत्वेनेति श्रीमद्बलदेवः, ज्ञानकर्मतपोयोगाद्यमिश्रणेनेति श्रीमद्विश्वनाथः, अव्यभिचारिणी एकान्ता स्थिरा—केनापि प्रतिकूलेन हेतुना निवारयितुमशक्या इति श्रीमन्मधुसूदनः—भक्तिः; विविक्तदेशसेवित्वं जनकोलाहलशून्यस्थानप्रियता—स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिर्विविक्तो देशः तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वमिति श्रीमच्छङ्करः, जनवर्जितदेशवासित्वमिति श्रीमद्रामानुजः, विविक्तः शुद्धश्चित्तप्रसादकरस्तं देशं सेवितुं शीलं यस्य तस्य भावस्तत्त्वमिति श्रीमच्छ्रीधरः, निर्जनस्थानप्रियतेति श्रीमद्बलदेवः; जनसंसदि अरतिः जनानामात्मज्ञानविमुखानां भोगविलासरतानां संसत् समवायः तस्यामरतिरप्रीतिः । अरतिरसतां सङ्गे, न तु सतां सङ्गदोषहरत्वात् मोक्षजनकत्वाच्च; तथाहि—"प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥" (भा, ३स्क, २५अ, २०श्लो), "त एते साधवः साध्वि सर्वसङ्गविवर्जिताः । सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥" (भा, ३स्क, २५अ, २४श्लो) इति । १० ।

अध्यात्मेति । अध्यात्मज्ञाननित्यत्वम् आत्मविषयकज्ञाननिष्ठत्वम्, तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानप्रयोजनं यत् तद्दर्शनं तस्य पुनः पुनरालोचनं प्रत्यक्षीकरणम् । एतत् अमानित्वादि विंशतिसंख्यकं ज्ञानं ज्ञानसाधनम्—ज्ञानार्थत्वात् ज्ञानमिति श्रीमच्छङ्करः, ज्ञायतेऽनेनात्मेति ज्ञानमात्मज्ञानसाधनमिति श्रीमद्रामानुजः—इति प्रोक्तम्,

अतोऽन्यथा यत् तदज्ञानम् अज्ञानतापादकम् । अमानित्वादीनि विंशतिमुपलक्ष्याह श्रीमद्विश्वनाथः—"अत्राष्टादश भक्तानां ज्ञानिनाञ्च साधारणानि, किन्तु भक्तेः—'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इत्येकमेव भगवदनुभवसाधनत्वेन यत्नतः क्रियते । अन्यानि सप्तदश उक्ताभ्यासवतां तेषां स्वत एवोत्पद्यन्ते न तेषु यत्न इति साम्प्रदायिकाः । अन्तिमे द्वे तु ज्ञानिनामसाधारणे एव ।" इति । श्रीमन्मधुसूदनस्त्वाह—"अमानित्वादीनां विंशतिसंख्यकानां समुच्चितो योग एव ज्ञानमिति प्रोक्तं न त्वेकस्याभावः" इति । स्वयं श्रीमता श्रीचैतन्येनोक्तं—"तृणादपि सुनीचेन तरोरपि सहिष्णुना । अमानिना मानदेन कीर्त्तनीयः सदा हरिः ॥" इति । अतोऽमानित्वादिकं विना भक्तिर्न सिद्ध्यतीत्यायाति । "न ह्यपुण्यवतां लोके मूढानां कुटिलात्मनाम् । भक्तिर्भवति गोविन्दे कीर्त्तनं श्रवणं तथा ॥" इति तदनुमानमभिव्यञ्जितं प्रमाणमपि दर्शयति पुण्यभूमावेव भक्तेरभ्युदयः । अमानित्वादिकं ज्ञानसाधनं चित्तभूमेः पवित्रत्वमेव साधयते । न पुनः पावित्र्यं विना भक्तेरभ्युदये सम्भावनास्ति । यत्तूक्तम्—"अथ 'श्रुतिस्मृती ममैवाज्ञे' इत्यादिनिन्दितमावश्यकक्रियानिषेधयोरुल्लङ्घनं द्विविधम् । तौ हि धर्म्मशास्त्रोक्तौ भक्तिशास्त्रोक्तौ चेति । तत्र भगवद्भक्तिविश्वासेन दौःशील्येन वा पूर्व्वयोरकरणाकरणप्रत्यामक्तौ न दैष्णवभावात् भ्रंशः 'देवर्षिभूताप्तनृणाम्' इत्याद्युक्तेः, 'अपि चेत् सुदुराचारः' इत्याद्युक्तेश्च । तादृशरुचिमति तु तयैव कृष्णाहिष्टत्वादपुनर्भवाद्यानन्दस्यापि वाञ्छा नास्ति, किमुत घृणास्पदस्य ततस्तत्र स्वत एव न प्रवृत्तिः । प्रमादादिना कदाचित् जातं चेत् विकर्म्म तत्क्षणादेव नश्यत्यपि । उक्तञ्च—'विकर्म्म यच्चोत्पतितं कथञ्चित् धुनोति सर्व्वं हृदि सन्निविष्टः' इति । अथ वैष्णवशास्त्रोक्तौ तर्हि विष्णुसन्तोषैकप्रयोजनावेव भवतः, तयोश्च तादृशत्वे श्रुते सति तदीयरागरुचिमतः स्वत एव प्रवृत्ती स्यातां, तत्सन्तोषैकजीवनत्वात् प्रीतिजातेः । अतएव न तत्र स्वानुगम्यमानरागात्मकसिद्धभक्तविशेषेण कृतत्वाकृतत्वयोरनुस-

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते॥१२॥

ध्यानस्यापेक्षा स्यात्, किन्तु तत्कृतत्वे सति विशेषणापत्ती भवतीत्यत्र विशेषः। अथ क्वचित् शास्त्रोक्तकर्मविध्यपेक्षा च रागकृत्यैव प्रवर्त्तितेति रागानुगान्तःपात एव" इति—तत्तु रागोदये स्वत एव विधिनिषेधयोरनुसरणं न तु प्रयत्नत इति प्रतिपादयति। रागोदयात् प्राक् अमानित्वादिकं साधनत्वेनावश्यमपेक्ष्यम्, रागोदये तु तेषां स्वाभाविकत्वम्। यत्तु श्रीमद्विष्णुपुर्य्योक्तौ दृश्यते—"अनुचितमुचितं वा कर्म्म कोऽयं विभागो भगवति परमास्तां भक्तियोगो द्रढीयान्। किरति विषमहीन्द्रः सान्द्रपीयूषमिन्दुर्द्वयमपि स महेशो निर्व्विशेषं बिभर्त्ति॥" इति, तत्तु रागवतां कर्म्मविभागं विनापि निषिद्धस्य त्यागः कर्त्तव्यस्यानुसरणञ्च स्वतो भवतः, कदाचिदवस्थावैगुण्यात् विकर्म्मजाताक्रान्ता अपि ते भगवत्यनुरागवशात् चेतसो विशुद्धिमनपहायैव ततो मेघविमुक्तचन्द्रमा इव वहिरायान्तीति प्रदर्शनार्थम्। 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इत्यत्र भक्तेः साधनान्तःपातित्वात् अन्यैः साधनैरस्याविप्रयोगो न युज्यते, साधनभक्तिरियम्; उक्तञ्च श्रीमता बलदेवेन—"भक्तिः श्रवणाद्येति"। अतः साधूक्तं श्रीमन्मधुसूदनेन—"समुच्चितो योग एव ज्ञानमिति प्रोक्तं न त्वेकस्याभावः" इति। ११।

उक्तज्ञानसाधनैर्यत् ज्ञातव्यं तदुच्यते ज्ञेयमिति। ज्ञेयं ज्ञातव्यं यत् तत् प्रवक्ष्यामि। यत् ज्ञेयं ज्ञातव्यं ज्ञात्वा विदित्वाऽमृतं मोक्षमश्नुते लभते। किन्तज्ज्ञेयम्? परं ब्रह्म, अनादिमत् न आदिमत् अनादिमत्—आदिमदिदं कार्य्यकारणात्मकं विश्वं, तज्ज्ञेयं न विश्ववत् आदिमत्। अनेनास्य विश्वातीतत्वं विश्वभिन्नत्वं सूचयति। आदिमद्धेयादि तद्वर्ज्जितमनादिमदिति श्रीमन्माध्वः। एतदेव विस्पष्टयति—न सत् स्थूलं कार्य्यं न असत् सूक्ष्मं कारणं तत् उच्यते। अनादिमदिति विशेषणम्, अनादि मत्परमिति पदच्छेदेन केचिद्व्या-

ख्यायते अनादीति बहुव्रीहौ चार्थे निष्पन्ने तत्र मतुप आनर्थक्यं पश्यन्ति: ।

श्लोकमिमं श्रीमद्रामानुजस्तदनुगः श्रीमद्बलदेवः प्रत्यगात्मपक्षे नियोजयति । तथाहि श्रीमद्रामानुजः—"अमानित्वादिभिः साधनैर्ज्ञेयं यत् प्रत्यगात्मस्वरूपं तत् प्रवक्ष्यामि, यत् ज्ञात्वा जन्मजरमरणादिप्राकृतधर्मरहितममृतमात्मानं प्राप्नोति । अनादि आदिर्यस्य न विद्यते तदनादि, अस्य हि प्रत्यगात्मन उत्पत्तिर्न विद्यते, तत एवान्तो न विद्यते……… । मत्परम् अहं परो यस्य तन्मत्परम्……… । ब्रह्म बृहत्त्वगुणयोगि शरीरादर्थान्तरभूतं, स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः । 'स चानन्त्याय कल्पते' इति श्रूयते, शरीरपरिच्छिन्नत्वं चास्य कर्मकृतं, कर्मबन्धमुक्तावनन्तत्वम् । आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते……… । न सन्नासदुच्यते कर्मकारणरूपादव्याद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते ।" इति । श्रीमद्बलदेव आह—"उक्तैः साधनैर्ज्ञेयमुपलभ्यं जीवात्मवस्तु परमात्मवस्तु च तदहं प्रकर्षेण सुबोधतया वक्ष्यामि, यज्ज्ञात्वा जनोऽमृतमश्नुते । तत्र जीवात्मवस्तूपदिशति अनादीत्यर्द्धकेन । नास्त्यादिर्यस्य तत् जीवस्यादिकत्पत्तिर्नास्त्यन्तोऽतोऽपि नेति नित्योऽसावित्यर्थः ……… अहमेव परः स्वामी यस्य तत्……… । जीवे ब्रह्मशब्दस्तु 'विज्ञानं ब्रह्म चेद्वेद' इत्यादिश्रुतेः……… । न सदिति । तदित्थं शुद्धं जीवात्मवस्तु कार्यकारणावस्थाविरहात् सत्त्वासत्त्व नोच्यते ।" इति । श्रीमद्बलदेवोऽनन्तरश्लोकं परमात्मपक्षे व्याचष्टे श्रीमद्रामानुजस्तु प्रत्यगात्मपक्षेऽपि, तद्यथा—"परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकर्तृत्वं श्रूयते, प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकर्तृत्वं श्रुतिसिद्धमेव ।" इति ।

श्रीमच्छङ्करस्तदनुयायिनश्च निर्विशेषब्रह्मपक्षे श्लोकमिमं व्याख्यातवन्तः । अनादि मत्परमिति पदच्छेदं श्रीमच्छङ्कर एवं प्रत्याचष्टे—

"अहं वासुदेवाख्या परा शक्तिर्यस्य तस्मात्परमिति......अर्थो न सम्भवति, ब्रह्मणः सविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात् न सदसदुच्यत इति । विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्च विप्रतिषिद्धः" इति । श्रीमच्छ्रीधरेण तु—"मम विष्णोः परं निर्व्विशेषरूपं ब्रह्म" इत्यर्थो निष्पाद्यते । विधिमुखेन सच्छब्देन निषेधमुखेनासच्छब्देनोच्यते, इदन्तु तदुभयविलक्षणमिति न केनचिच्छब्देनोच्यत इति श्रीमच्छङ्करमतदनुयायिनश्च । शब्दो हि जातिगुणक्रियासम्बन्धद्वारेणार्थावबोधे हेतुः । न हि ब्रह्मणि जातिगुणक्रियासम्बन्धानां सम्भवः ; यतः 'एकमेवाद्वितीयम्' इति जातिनिषेधः, 'निर्गुणं निष्क्रियं शान्तम्' इति गुणक्रियासम्बन्धानां निषेधः । अपरा परा चेति प्रकृतिद्वयवत्त्वेन परब्रह्मणस्तयोः सम्बन्धोऽवश्यम्भावी । सम्बन्धे सति चिदचिन्नियम्य-नियामकत्वादिगुणक्रियाभेदोऽपि सिध्यति । एवं भेदे सिद्धे अयमीश्वरः, अयं जीवः, इयं प्रकृतिरिति भिन्नत्वेन ग्रहणं सम्भवति । एवं-ग्रहणात्तु शब्दैरेव निर्वक्तव्यम् । अतस्तथा निरूप्यन्ते श्रुतिभिरीश्वरो जीवः प्रकृतिश्च ;—"स वा अयमात्मा सर्व्वेषां भूतानामधिपतिः सर्व्वेषां भूतानाᳫं राजा । तद्यथा रथनाभौ रथनेमौ चाराः सर्व्वे समर्पिता एवमेवास्मिन्नात्मनि सर्व्वाणि भूतानि सर्व्व एव आत्मानः समर्पिता." (बृ, आ, उ, ५।५।१५), "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः । एतस्य वाक्षरस्य प्रशासने गार्गि निमेषा मुहूर्त्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति । एतस्य वाक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्या यां याञ्च दिशमन्वेति' (बृ, आ, उ, ४।८।९) इत्येवमाद्याः । अनिर्व्वचनीयत्वादिवादिन्यः श्रुतयः कथं न विरुध्यन्ते प्रोक्तं तत् प्राक् ।

अथार्द्धकस्य विषयो जीव इति पक्षो न सर्व्वथा रुचिरोऽनन्तर-श्लोकस्थेन तत्पदेन परामृष्टत्वात् पूर्व्वस्य । अमानित्वादिज्ञानसाधनानि

सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥१३॥

पर्य्यायान्तरे यथायथं लक्षणानि स्युः क्षेत्रज्ञस्य भगवद्ब्रह्मणिरतस्य। अतो नास्ति तन्निर्व्वचने विशेषप्रयोजनम्। १२।

तज्ज्ञेयं ब्रह्म कार्य्यकारणातीतमित्युक्तम्। न हि कार्य्यकारणातीतं किमपि वस्त्वकारकं ज्ञानगोचरं भवितुं शक्यम्। सुतरां ज्ञेयत्वमस्य न सिध्यति। सिध्यति तस्य कार्य्यकारणानां साक्षात् कारकत्वात्। नहि तन्नियमनं विना किमपि क्रियावद्भवितुं समर्थम्। अतस्तदेव प्राणिनिचयस्य पाणिपादादियुक्तस्य सर्व्वेन्द्रियाधिष्ठातृ नियन्त्रिति भङ्ग्यन्तरेणाह सर्व्वत इति। तत् ज्ञेयं ब्रह्म सर्व्वतः पाणिपादं सर्व्वत्र पाणयः पादाश्च यस्य तत्—'सर्व्वतः सर्व्वत्र सर्व्वेषु पाणयः पादाश्चाचेतनाः स्वस्वव्यापारेषु प्रवर्त्तनीया यस्य चेतनस्य क्षेत्रज्ञस्य तत्' इति श्रीमन्मधुसूदनः—सर्व्वतः सर्व्वत्र अक्षिशिरोमुखम् अक्षीणि शिरांसि मुखानि च यस्य 'प्रवर्त्तनीयानि' तत्, सर्व्वतः सर्व्वत्र श्रुतिमत् श्रुतयः श्रवणेन्द्रियाणि तानि विद्यन्ते 'प्रवर्त्तनीयत्वेन' यस्य तत्। न च पाणिपादादियुक्तमेव तज्ज्ञेयं वस्त्वित्याह—लोके प्राणिनिकाये सर्व्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते। पाणिपादादिकं यत् किञ्च तत् संव्याप्य आत्मन्यन्तर्भूय विद्यते तत्। यद्येवं कथं 'सर्व्वतः पाणिपादन्तत्' इत्युक्तिः? धावनग्रहणादिक्रियाणां प्रकाशस्थानानि पाणिपादादयस्ताभ्यः क्षेत्रज्ञपतिप्रेरणासम्भूताभ्य उत्पद्यन्ते तिष्ठन्ति च यतः। येभ्यो वीजेभ्यो देहानामुत्पत्तिस्तेषां वीजानामेकत्वेऽपि ततः पाणिपादादीनां भिन्नाकारत्वमन्तर्भूतक्षेत्रज्ञशक्तिवैचित्र्यतानुसारतः क्षेत्रज्ञपतेः प्रेरणयैव भवतीति सैव तेषामुत्पत्तौ, उत्पत्त्यनन्तरं तत्तत्कार्य्यावस्थानात् स्थितौ च हेतुः। उक्तस्यैव स्वयमाचार्य्येणानन्तरश्लोके। "सकलप्राणिकारणोपाधिद्वारेण ज्ञेयब्रह्मणोऽस्तित्वं प्रतिपाद्यते" इति श्रीमन्नीलकण्ठः श्रीमच्छङ्करवाक्यानुसरणेन। "अपाणिपादो जवनो ग्रहीता

सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥
बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्त्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

...चक्षुः स शृणोत्यकर्णः" (श्वे, उ, ३।१८) इति। पाणिपादाद्य-...कोऽपि प्रेरकत्वेन तत्कार्य्यकृदिति सरलः पन्थाः। १३।

'सर्व्वतः पाणिपादम्' इत्युक्त्वा पाणिपादादियुक्तत्वमस्य न विभाव्य-... पूर्व्वोक्तवचनस्य हेतुरुच्यते सर्व्वेन्द्रियेति। तत् ज्ञेयं ब्रह्म ...न्द्रियगुणाभासं सर्व्वेषामिन्द्रियाणां गुणानां तद्विषयाणाञ्च आभासः ...प्रकाशो यस्मात् तत्—"तस्य भासा सर्व्वमिदं विभाति" ..., ५।१५) इति श्रुतिः, सर्व्वेन्द्रियाणि गुणांश्चाभासयतीति श्रीम-...:,—स्वयन्तु सर्व्वेन्द्रियविवर्ज्जितं सर्व्वैरिन्द्रियैर्हीनम्, असक्तं सङ्ग-...तम्, अथापि सर्व्वभृत् सर्व्वेषां धारयिता पोषयिता चैव, निर्गुणं ...सत्त्वरजस्तमोगुणविरहितम्, अथच गुणभोक्तृ सत्त्वरजस्तमोगुणानां भोक्तृ पालकं तत्तत्क्रियाणामविच्छेदप्रवर्त्तनेन। अत्र श्रुतिः—"सर्व्वे-न्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्। सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं सुहृत् ॥" (श्वे, उ, ३।१७) इति। १४।

पाणिपाद्यसंयुक्तत्वं दर्शयति हेत्वन्तरेण बहिरिति। तत् ज्ञेयं ब्रह्म भूतानां बहिरन्तश्च सर्व्वगतं सर्व्वमन्तर्भूय वर्त्तमानम्, अचरम् अचलमविकारित्वात् चरं चलमेव च क्रियाकारित्वात्, सूक्ष्मत्वात्तद-विज्ञेयं संसारिभिरिति शेषः, दूरस्थम् अन्तिके च तत्। अत्र श्रुतिः —"तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्व्वस्य तदु सर्व्व-स्यास्य वाह्यतः ॥" (वा, स, उ, ५) इति। १५।

अविभक्तमिति। भूतेषु प्राणिषु अविभक्तञ्च एकमपि विभक्तमिव

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य धिष्ठितम् ॥१७॥**

भिन्नमिव च स्थितम् प्रतिहृदयमन्तर्यामित्वेन, तज्ज्ञेयं भूतभर्तृ च भूतानां पोषकम्, ग्रसिष्णु ग्रसनशीलं प्रवेशस्थानम्, प्रभविष्णु च प्रभवहेतुश्च। अत्र श्रुतिः—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति।" (तै, उ, ३) इति। १६।

ज्योतिषामिति। ज्योतिषां सूर्य्यादीनामपि तत् ज्योतिः, तमसः परं तत् उच्यते। स्वयं तत् ज्ञानं ज्ञानस्वरूपं, ज्ञेयं ज्ञातव्यम्, ज्ञानगम्यम् अमानित्वादिज्ञानसाधनैर्गम्यं प्राप्यम, सर्व्वस्य हृदि धिष्ठितं सन्निहितम्। अत्र श्रुतयः—"न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभान्ति सर्व्वं तस्य भासा सर्व्वमिदं विभाति॥" (कठ, ५।१५) इति, 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" (श्वे, उ ३।८) इति, "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम्। अन्तःशरीरे ज्योतिर्म्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः॥" (मु, उ, ३।१।५) इति।

सर्व्वतः पाणिपादम्" इत्यारभ्य परात्मतत्त्वमुपदिष्टवानाचार्य्यः। स हि परात्मा जनानामनन्तकोटिहस्तैः प्रयोजनानि विदधाति, अनन्तकोटिचरणैस्तानुपागच्छति, अनन्तकोटिनयनैस्तान् पश्यति, अनन्तकोटिशिरोमुखैस्तानुपदिशति, अनन्तकोटिश्रुतिभिस्तेषां वचनानि शृणोति, अथापि न तस्मिन् हस्तचरणनयनाननश्रवणानि विद्यन्ते, तैर्विना तत्तत्कार्य्यं साधयति स स्वशक्त्येति तत्तच्छब्दैर्निर्द्दिशः; एकस्य चित्स्वरूपस्य विलासा एते इति प्राक् प्रतिपादितम्। विविधकल्याण-साधनेऽनासक्तः सन् स व्यापृतः, अचलत्वेनात्मन्येव स्थित्वा स चलत्वं कार्य्यव्यापृतत्वं भजते। स हि पापकलुषितचित्तसन्निधौ दूरस्थ इति प्रतिभाति, भक्तानान्तु सन्निधाविति, दूरमन्तिकं सर्व्वमेव व्याप्य च स-

इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥
प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥१९॥

स्थितः । स सर्वातीतोऽपि सर्वमात्मन्यन्तर्भूय विद्यमान इति प्रतिहृदयं तस्याधिष्ठानम्, यथाप्येकोऽखण्डः सः । ततो भूतानामुत्पत्तिस्तस्मिन् स्थितिस्तस्मिन्ननुप्रवेशश्च । १७ ।

यथोक्तार्थमुपसंहरति इति क्षेत्रमिति । इति एवं क्षेत्रं महाभूतादि धृत्यन्तं, तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयञ्च अनादिमदित्यादि तमसः परमित्यन्तं समासतः सङ्क्षेपतः सारसंग्रहेणोक्तम् । एतद्विज्ञानस्य फलमुच्यते—मद्भक्तः मदेकशरणः सर्वान्तर्यामिणो मम भजननिरतः, एतत् यथोक्तं क्षेत्रं ज्ञानं ज्ञेयञ्च विज्ञाय ज्ञानविषयं कृत्वा मद्भावाय मम सर्वान्तर्यामिणो भावाय स्वरूपैक्याय प्रपद्यते युज्यते । १८ ।

एवं तत् क्षेत्रं यद्द्रव्यं यद्धर्मकं यैर्विकारैर्युक्तं तदुक्ता यस्माज्जायते यत्स्वरूपो यत्प्रभावश्च क्षेत्रज्ञः क्षेत्रज्ञश्चेति वक्तुमुपक्रमते । अनादिमदित्यादिभिः क्षेत्रज्ञपतेः स्वरूपमुक्तमिति दृष्ट्वा श्रीमन्नीलकण्ठेन स्वरूपमुक्तमिति निर्धार्य 'यस्माद्यज्जायते तच्च क्षेत्रज्ञस्य प्रभावश्चेति द्वय' वक्तव्यत्वेन निर्दिष्टम् । अमानित्वादिभिर्ज्ञानम् अनादिमदित्यादिभिर्ज्ञेयमेवोक्तम्, पुरुषस्य भोक्तृत्वस्वरूपं, परमपुरुषस्य चोपद्रष्टृत्वादिकस्वरूपमनन्तरमुच्यत इति तथैवास्माभिरन्यैर्व्याख्यातृभिः समं विभाव्यते । अनादी प्रकृतिमिति । प्रकृतिं पुरुषञ्चैव उभावपि अनादी नित्यौ विद्धि । विकारांश्च देहेन्द्रियादीन् इच्छादीनिति श्रीमन्नीलकण्ठः, गुणांश्च सत्त्वरजस्तमोरूपान्—गुणपरिणामान् सुखदुःखमोहादीनिति श्रीमच्छ्रीधरः, बुद्धीन्द्रियादीनिति श्रीमन्नीलकण्ठः

—प्रकृतिसम्भवान् प्राकृतान् विद्धि। अत्र श्रीमच्छङ्करः—"प्रकृतिं पुरुषञ्चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी न विद्यते आदिर्ययोस्तावनादी, नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम्, प्रकृतिद्वयवत्त्वमेव ह्यीश्वरस्येश्वरत्वं याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुः। ते द्वे अनादी सत्यौ संसारस्य कारणम्। न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति, तेन हि केवलेश्वरस्य कारणत्वं सिध्यति। यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वं, तदसत्; प्राक् प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावात् ईश्वरस्यानीश्वरत्वप्रसङ्गात् संसारस्य निर्निमित्तत्वे निर्मोक्षत्वप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च; नित्यत्वे पुनरीश्वरप्रकृत्योः सर्व्वमेतदुपपन्नं भवेत्" इति। श्रीमद्रामानुजस्तु—"प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादी विद्धि। बन्धहेतुभूतान् विकारानिच्छाद्वेषादीन् अमानित्वादिकांश्च गुणान् मोक्षहेतुभूतान् प्रकृतिसम्भवान् विद्धि पुरुषेण संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैरिच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति, सैवास्य अमानित्वादिभिः स्वविकारैः पुरुषस्यापवर्गहेतुर्भवतीत्यर्थः" इति। श्रीमन्मधुसूदन आह—"तत्र सप्तमे ईश्वरस्य द्वे प्रकृती परापरे क्षेत्रक्षेत्रज्ञलक्षणे उपन्यस्य 'एतद्योनीनि भूतानि' इत्युक्तं तत्रापरा प्रकृतिः क्षेत्रलक्षणा परा जीवलक्षणा इति तयोरनादित्वमुक्त्वा तदुभययोनित्वं भूतानामुच्यते। प्रकृतिर्मायाख्या त्रिगुणात्मिका पारमेश्वरी शक्तिः क्षेत्रलक्षणा या चापरा प्रकृतिरित्युक्ता; या तु परा प्रकृतिर्जीवाख्या प्रागुक्ता स इह पुरुष इत्युक्त इति पूर्व्वापराविरोधः" इति।

अत्रेदं विवेच्यम्;—परापरे प्रकृती न परमपुरुषतो भिन्ने, तच्छक्तित्वात्। अभिन्नत्वेऽपि तयोर्जगदाकारेण जीवाकारेण प्रकाशमानत्वात् परतो भिन्नता। साधूक्तं श्रीमच्छङ्करेण—"ज्ञाननित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यव्यपदेशो नोपपद्यते इति चेत्, न, प्रततौष्ण्यप्रका-

शेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात्। ननु सवितुर्दाह्यप्रकाश्यसंयोगे दहति प्रकाशयतीति व्यपदेशः स्यात्; न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः, न, असत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनात्; एवमसत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्तृव्यपदेशोपपत्तेर्न वैषम्यम्। कर्मापेक्षायान्तु ब्रह्मणि ईक्षितृत्वश्रुतयः सुतरामुपपन्नाः। किं पुनस्तत्कर्म यत्प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति। तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः। यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति। यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसम्बन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति न तच्चोद्यमवतरति; सवितृप्रकाशवत् ब्रह्मणो ज्ञानस्वरूपनित्यत्वेन ज्ञानसाधनापेक्षानुपपत्तेः। अपि च अविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात् न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य।" (वे, सू, भा, १।१।५) इति। जीवतत्त्वमधिकृत्य श्रीमद्रामानुज आह—"नात्मोत्पद्यते……। कथं तर्हि एकविज्ञानेन सर्व्वविज्ञानप्रतिज्ञोपपद्यते? इत्थमुपपद्यते;—जीवस्यापि कार्य्यत्वात् कार्य्यकारणयोरनन्यत्वाच्च। एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात्; नेत्युच्यते, कार्य्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः, तज्जीवस्याप्यस्त्येव। इयांस्तु विशेषः—वियदादेरचेतनस्य यादृशोऽन्यथाभावो न तादृशो जीवस्य। ज्ञानसङ्कोचविकाशलक्षणो जीवस्यान्यथाभावो वियदादेस्तु स्वरूपान्यथाभावलक्षणः। सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते। एतदुक्तं भवति—भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यताञ्च प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तृगतकापुरुषाश्रयत्वञ्च नियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्व्वदा सर्व्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वञ्च

कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥

प्रतिपाद्य सर्व्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपादितम्।" (वे, सू, भा, २।१।१८) इति। स च परापरप्रकृतियुक्तं परस्य ब्रह्मणः स्वभावमेव समीक्षावान्—"एवं सदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक् सृष्टेरेकत्वावधारणञ्च नामरूपविभागाभावादुपपद्यते—'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' इति हि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे वदन्तीति।" (२।१।१८) इति। यद्यपि श्रीमद्रामानुजेन चिदचिच्छरीरं ब्रह्मेत्युक्तं तथाप्यन्तर्यामिब्राह्मणानुसारिणा तेन न तदतीतत्वं तस्यास्वीकर्त्तुं शक्यम्। एवं सत्याचार्य्यमतेन तन्मतस्य सामञ्जस्यं भवतीत्यलं पल्लवितेन। १९।

कस्य वा हेतुः प्रकृतिः पुरुषश्च तद्दर्शयति कार्य्येति। कार्य्यकारणकर्त्तृत्वे कार्य्यं शरीरम् एकादशेन्द्रियाणि पञ्च विषया इति षोडश विकाराः, कारणानि समनस्कानीन्द्रियाणि महानहङ्कारो भूततन्मात्राणीति प्रकृतिविकृतयः सप्त, तेषां कर्त्तृत्वे क्रियाकारित्वे प्रकृतिर्हेतुराश्रयः। सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे पुरुषो हेतुः सुखदुःखानुभवाश्रय इत्यर्थः। पुरुषो विषयी प्रकृतिपरिणामो विषयः, विषयविषयिसम्बन्धो हि भोग्यभोक्तृत्वमूलम्। यथाहाचार्य्योऽनुगीतायाम्—"अतः परं प्रवक्ष्यामि सत्त्वक्षेत्रज्ञयोर्यथा। संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः। विषयो विषयित्वञ्च सम्बन्धोऽयमिहोच्यते॥ विषयी पुरुषो नित्यं सत्त्वञ्च विषयः स्मृतः। व्याख्यातं पूर्व्वकल्पेन मशकोडुम्बरं यथा॥ भुज्यमानं न जानीते नित्यं सत्त्वमचेतनम्। यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते॥ नित्यं द्वन्द्वसमायुक्तं सत्त्वमाहुर्मनीषिणः। निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः॥ समः संज्ञानुगश्चैव स सर्व्वत्र व्यवस्थितः। उपभुङ्क्ते सदा सत्त्वमपः पुष्करपर्णवत्॥ सर्व्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते। जल-

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

बिन्दुर्यथा लोलः पद्मिनीपर्णसंस्थितः॥ एवमेवाप्यसंयुक्तः पुरुषः स्यात् संशयः। दृश्यमानमभूतत्त्वं पुरुषस्येति निश्चयः॥ यथा दृश्यस्य कर्त्ता च संयोगोऽप्यनयोस्तथा। यथा प्रदीपमादाय कश्चित्तमसि गच्छति॥ तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः। यावद्द्रव्यगुणास्तावत् प्रदीपः सम्प्रकाशते॥ क्षीणे द्रव्ये गुणे ज्योतिरन्तर्धानाय गच्छति। व्यक्तः सत्त्वगुणस्त्वेवं पुरुषोऽव्यक्त इष्यते॥" (म, मो, ५०अ, ७—१७श्लो) इति। पुरुषो हि चित्स्वरूपोऽव्यक्तश्चक्षुराद्यगोचरः। प्रकृतिपरिणामाधिष्ठितो हि स सर्व्वमुपलभते, उपलभ्यते चान्यैः। अतएव हि प्रकृतिपरिणामस्य सत्त्वस्य दृश्यमानस्य प्रदीपत्वम्। यदा हि योगप्रभावतो भवति तस्य तिरोधानं तदा हि पुरुषस्य स्वस्वरूपं साक्षात्-प्रत्यक्षं भवति। अतएवाहाचार्य्यः—'क्षीणे द्रव्यगुणे' इत्यादि। आह च पतञ्जलिः—"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्" (३।५६) इति। प्रकृतिपरिणामस्य सत्त्वस्य पुरुषस्य च यदा भेदज्ञानं प्रत्यवतिष्ठते तदा सत्त्वं स्वायत्तं तथा सर्व्वविधज्ञानस्योपतिष्ठते। अतएवाहाचार्य्यः—"तथा सत्त्वप्रदीपेन गच्छन्ति परमैषिणः। यावद्द्रव्यगुणास्तावत् प्रदीपः सम्प्रकाशते॥" इति। आह च पतञ्जलिः—"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञातृत्वञ्च" (३।५०) इति। 'क्षीणे द्रव्यगुणे' इत्युक्तया विषयमात्रस्य स्थूलत्वापनयनेन स्वच्छत्वप्राप्तिः प्रदर्श्यते, अतः स्वरूपप्रत्यक्षीकरणे नान्तरायस्तिष्ठति। २०।

पुरुषस्य कथं भोक्तृत्वं सिध्यति तदाह पुरुष इति। प्रकृतिस्थः प्रकृतिपरिणामाभिनिविष्टः पुरुषः प्रकृतिजान् गुणान् सुखदुःखादीन् भुङ्क्ते। एवं प्रकृतिपरिणामाभिनिविष्टः किं भवति तदाह—अस्य पुरुषस्य गुणसङ्गः विषयाभिनिवेशः सदसद्योनिजन्मसु कारणम्। चिन्मात्रस्य पुरुषस्य सदसत्त्वं सत्त्वादिगुणनिमित्तं भवति। अतेदं

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥२२॥

विवेच्यम्—स्वरूपतः पुरुषोऽन्यस्मात् पुरुषान्न भिद्यते, तथापि यस्य यादृशे विषयेऽभिनिवेशस्तादृशी चित्तवृत्तिस्तस्य भवति। अतएवोक्तं विष्णुपुराणे—“अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्य्यविशालसङ्गमत्तः। अनुदिनकृतपापबन्धयत्नः पुरुषपशुर्न हि वासुदेवभक्तः॥” (वि, पु, ३यं, ७म, ३१श्लो) इति। तथाच—“विमलमतिर्विमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्त्वमित्रभूतः। प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः॥” (वि, पु, ३यं, ७म, २४श्लो) इति। भगवत्यभिनिवेशः सद्गुणाय विषयाभिनिवेशोऽसद्गुणाय भवति। अत-एवाह भागवतम्—“यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणैस्तत्र समा-सते सुराः। हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो वहिः॥” (भा, ५स्क, १८म, १२श्लो) इति। २१।

पुरुषं निर्णीय सम्प्रति परमात्माख्यः परमपुरुषो निर्णीयते उप-द्रष्टेति। उपद्रष्टा साक्षी—समीपस्थः सन् द्रष्टा स्वयमव्यापृतः, यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा, यज्ञोप-द्रष्टृवद्वा सर्व्वविषयीकरणादुपद्रष्टा इति श्रीमच्छङ्करः; अनुमन्ता अनु-मोदिता—अनुमोदनमनुमननं कुर्व्वंस्तु तत्क्रियासु परितोषस्तत्कर्त्ता अनुमन्ता, अथवा अनुमन्ता कार्य्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता, अथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता इति श्रीमच्छङ्करः, तत्तत्कर्म्मानुरूपप्रवर्त्तक इति श्रीमज्जीवः, अनुमतिदाता तदनुमतिं विना जीवः किञ्चिदपि कर्त्तुं न क्षम इति श्रीमद्बलदेवः, अनुमन्तेत्य-नेन पापस्य नानुमन्तेति बोद्धव्यम्; भर्त्ता धारयिता पोषयिता; भोक्ता पालकः—बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्व्वविषयविषया-श्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्ता इति

**य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह।**
**सर्व्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥२३॥**

श्रीमच्छङ्करः, पालयितेति श्रीमज्जीवः, निर्व्विकार एवोपलब्धा इति श्रीमन्मधुसूदनः ; महेश्वरः सर्व्वेषामीशितॄणामीश्वरः पतिः—सर्व्वात्मत्वाच्च महान् ईश्वर इति श्रीमच्छङ्करः ; एवम्भूतोऽस्मिन् देहे परः पुरुषः परमपुरुषः परमात्मा इति चाप्युक्तः। श्रीमच्छङ्करस्तदनुयायिनश्च जीवेश्वरैक्यप्रदर्शनाय पूर्व्वस्मिन् पद्ये पुरुषस्य प्रकृतिमिथ्यातादात्म्यात् संसारं प्रदर्श्य अस्मिन् पद्ये किंविधं वा तस्य स्वरूपं यत्र न भवति तस्य संसारस्तदेव प्रदर्शितवानाचार्य्य इत्याहुः। श्रीमद्रामानुजस्य तु व्याख्या पुरुषपक्ष एव, न तु परमपुरुषपक्षे। श्रीमच्छ्रीधरजीवबलदेवविश्वनाथा ह्यत्रेश्वरपक्षमेव स्थापितवन्तः। अनन्तरेषु श्लोकेषु "समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" (१३।२७), "समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम्" (१३।२८), "अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः" (१३।३१) इत्युक्तत्वादीश्वरतत्त्वमेवात्रोक्तमाचार्य्यैरिति सरलः पन्थाः। 'देहेऽस्मिन्' इति कथनेन प्रतिहृदयं तं शास्तृरूपेण द्रष्टुमुपदेशोऽयमिति सिध्यति। उपद्रष्टेत्यादिविशेषणानि तदनुरूपाण्येव। सर्व्वे जना आत्मन्यधिष्ठितस्य परमात्मनः सत्कर्म्मण्यनुमोदनमसत्कर्म्मण्यननुमोदनमनुभवन्ति। अतएवाह मनुः—"यत्कर्म्म कुर्व्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः। तत् प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्ज्जयेत् ॥" (मनु, ४अ, १६१श्लो) इति। "सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम्" (श्वे, उ, ४।१४) इत्यत्र भाष्येऽन्तःसाक्षित्वेन गृहीतः परात्मा सर्व्वेषां जनानां शास्तोपदेष्टा पथप्रदर्शकश्च। अतएव स्वपितरं प्रति प्रह्लादः—"शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः। तमृते परमात्मानं तात कः केन शास्यते ॥" (वि, पु, १अं, १७अ, २०श्लो) इति। २२।

उपद्रष्टानुमन्तेत्यादिरूपेण परमपुरुषं तच्छक्तिं प्रकृतिञ्च ज्ञात्वा

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्म्मयोगेन चापरे ॥२४॥**

किं भवति तदाह य इति । यः पुरुषमेवमुपद्रष्टानुमन्तेत्यादिरूपेण, गुणैः सविकारैः प्रकृतिञ्च परामपराञ्च वेत्ति जानाति स सर्व्वथा सर्व्व-प्रकारेण वर्त्तमानोऽपि न भूयः अभिजायते देहसम्बन्धं भजते देहाभि-निवेशशून्यः परमात्मन्येव निवसति । अतएवानन्तराध्याये वक्ष्यति "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" (१४।२) इति । एवमिदं प्रमाणत्वेन गृहीत्वा गीतातात्पर्य्यनिर्णये श्रीमतानन्दतीर्थैर्नोक्तं 'न च जीवेश्वरैक्यं मुक्तावपि' इति । ऐक्यमत्र जीवस्यास्तित्वविलोपः, स्वरूपैक्ये तु न तस्य तत्सि-द्धसम्भूतिः ; तथा सति 'मम साधर्म्यमागताः' इति विशेषणं व्यर्थं स्यात् । २३ ।

प्रकृतिपरमपुरुषज्ञानान्मुक्तिरित्युक्तोपायान्तरमाह ध्यानेनेति । के-चित् ध्यानेन—ध्यानं नाम शब्दादिभ्यो विषयेभ्यो श्रोत्रादीनि कर-णानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतयितर्य्येकाग्रतया यच्चिन्तनं तद्ध्यानं ......तैलधारावत् सन्ततोऽविच्छिन्नप्रत्ययो ध्यानमिति श्रीम-च्छङ्करः, आत्मानं पश्यन्ति परमात्मतयेति श्रीमद्गिरिः,—आत्मना मनसा आत्मनि बुद्धौ आत्मानं परमात्मानं पश्यन्ति अन्तर्नयनगोचरं कुर्व्वन्ति । अन्ये सांख्येन योगेन ज्ञानेन प्रकृतिपुरुषविवेकेन, अपरे च कर्म्मयोगेन परमात्मानं पश्यन्तीति शेषः । ननु यद्यपि येन केनचि-दुपायेन परमात्मानमपरोक्षज्ञानविषयं कर्त्तुं शक्यते, कथं तर्ह्यस्मिन् शास्त्रे योगत्रयसमन्वये महान् यत्नः ? उच्यते, ईश्वरो हि परमकारुणिकः स्वात्मानं साधकसन्निधौ तत्प्रतिपत्त्यनुसारत आविष्करोति, अतः केचित्तं सत्तामात्रेण, केचित्तं ज्ञानमात्रेण, केचित्तं फलदातृस्वरूपेण पश्यन्ति । एकत्र योगत्रयसाधनपराणां सन्निधौ पुनः सर्व्वस्वरूपाविष्करणं भवति, सुतरां तेन तेषां महती कृतार्थता । न खलु वाच्यं सांख्ययोगिनः

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥
यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥२६॥

परमात्मानं द्रष्टुमनधिकारिणः पुरुषव्यतिरिक्तस्य तस्यास्वीकारात्। विमुक्तस्य पुरुषस्येश्वरत्वस्वीकारेण तेरपि परात्मस्वीकारावकाशोऽदायि। सेश्वरसांख्यपरिशोधितबुद्धीनान्तु भवति परमात्मना योगः, स एव पन्थाऽत्र परिच्छिन्नः। भागवते कपिलोक्तावतएव सेश्वरसांख्यस्य प्राधान्यम्। २४।

ये पुनरध्यात्मज्ञानानुशीलनपरास्तेऽपि कथं तरन्ति तदाह अन्ये त्विति। अन्ये तु एवं प्रकृतिपुरुषतत्त्वमजानन्तोऽन्येभ्य आचार्य्येभ्यः श्रुत्वा उपासते चिन्तयन्ति परमात्मानं साक्षात्कर्त्तुं यतन्ते। श्रुतिपरायणा उपदेशश्रवणपरायणास्तेऽपि मृत्युं संसारमतितरन्त्येव। न हि पुनः सर्व्वे वहुश्रमस्वीकारेणात्मतत्त्वसाक्षात्कारे यत्नं कर्त्तुं समर्थाः, अपरेषां समुपार्ज्जितं तत्त्वं ते सहजेनैवाधिगत्य श्रद्धया तत्साक्षात्कारे यत्नं कुर्व्वाणास्तस्मिन् कृतार्था मुक्ता भवन्ति। २५।

सर्व्वभूतोत्पत्तिमाह यावदिति। यावत् किञ्चित् सत्त्वं वस्तु संजायते, तत् वस्तु, हे भरतर्षभ, क्षेत्रक्षेत्रज्ञसंयोगाद्विद्धि जानीहि। जीवतत्त्वेन मिलितं प्रकृतितत्त्वं सर्व्वान्तर्यामिणाऽध्यक्षत्वेन जगत् सूयत इत्यस्य शास्त्रस्य सिद्धान्तः। जीवतत्त्वप्रकृतितत्त्वयोः परमपुरुषस्य शक्तित्वेन नाद्वैततत्त्वस्य हानिः। "वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥" (भा, १स्क, २अ, ११श्लो) इत्येकस्य चित्स्वरूपस्य यथा साधकग्रहणशक्तितारतम्येन भिन्नभावेनोपलब्धिस्तथा तस्यात्मशक्तिप्रकाशेन स्रष्टृत्वमुपलभ्यते, सृष्टिचास्वतन्त्रास्वातन्त्र्ये च। २६।

समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८॥

को वा सम्यग्दर्शी तदाह सममिति । सर्व्वेषु भूतेषु समं अविशेषं सम्यगप्रच्युतस्वरूपेणावस्थितं तिष्ठन्तं विनश्यत्सु स्वरूपविच्युतिं भजत्सु अविनश्यन्तं स्वरूपे नियतविद्यमानं परमेश्वरं यः पश्यति स पश्यति सम्यगिति शेषः । भूतेषु तारतम्येन चित्स्वरूपस्य प्रकाशदर्शनात् भगवान् तारतम्येन तेषु वर्त्तते इति पृथग्जना मन्यन्ते । न हि जातु भगवत्स्वरूपस्य कुत्रापि तारतम्यमस्ति, सर्व्वत्रैव तस्य पूर्णस्वरूपेण विद्यमानत्वात्—"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥" (वृ, आ, उ, ७।१।१) इति । ये पुनर्मन्यन्ते पूजनार्च्चनादिभिर्भगवन्तं परितोषयन्तस्तमनुकूलयितुं तद्विपरीतैः प्रतिकूलयितुं च समर्था जनाः, ते पुनरज्ञानतावशात् मानववत् तं चलं कुर्व्वन्ति । न हि भगवति चलतास्ति पूर्णस्वरूपेण नियतविद्यमानः स इति जानंस्तस्मिन् पूर्णास्वस्तता साधकस्य । २७ ।

न केवलमेतेन सम्यग्दर्शित्वमुत्कृष्टा गतिरपीत्याह सममिति । सर्व्वत्र समं सम्यगप्रच्युतस्वरूपेण समवस्थितमीश्वरं पश्यन् आत्मना स्वेन आत्मानं न हिनस्ति न सन्तापयति, ये पुनः क्रोधाद्यधीनं घोररूपं देवं मन्यन्ते ते निरतिशयकृच्छ्रसाधनेन स्वदेहं कर्शयन्नात्मानं हिनस्ति, अतएवाहाचार्य्यः—"कर्शयन्तः शरीरस्थं भूतग्राममचेतसम् । माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥" (१७।६) इति । एवमात्मनोऽहिंसया भगवदुपासनस्य फलमाह,—ततोऽहिंसनात् परामुत्कृष्टां गतिं याति प्राप्नोति । 'आत्मानं' सर्व्वभूतस्थमात्मानमिति ग्रहणे भवत्यर्थः—न कमपि स मनसा हिनस्ति । कथम् ? सर्व्वभूतेषु समवस्थितमीश्वरं दृष्ट्वा तेषु मैत्र्येव तस्य जायते । यथाह प्रह्लादः—

**प्रकृत्यैव च कर्म्माणि क्रियमाणानि सर्व्वशः ।**
**यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥२९॥**

"सर्व्वभूतस्थिते तस्मिन् मतिर्मैत्री दिवानिशम् । भवतां जायतामेवं सर्व्वक्लेशान् प्रहास्यथ ॥" (वि, पु, १अं, १७अ, ७९श्लो) इति । भूतद्वेषिणः पूजां न स्वीकरोति परमेशः । अतएवाह भागवतम्—"अहं सर्व्वेषु भूतेषु भूतात्मावस्थितः सदा । तमवज्ञाय मां मर्त्त्यः कुरुतेऽर्च्चाविडम्बनम् ॥ यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्च्चां भजते मौढ्यात् भस्मन्येव जुहोति सः ॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः । भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे । नैव तुष्येऽर्च्चितोऽर्च्चायां भूतग्रामावमानिनः ॥" (भा, ३स्क, २९अ, २१—२४श्लो) इति । २८ ।

रागद्वेषहिंसादिवशात् पीड़नपरान् समभावेन द्रष्टुं को वा समर्थः ? आत्मनश्च तत्तद्विकाराधीनत्वात् क्षमापरायणत्वं न सम्भवति । यदि वा सर्व्वत्र भगवन्तं पश्येत्, तथापि जीवानां व्यवहारवैगुण्यं दृष्ट्वा तस्मिन् तेषामनैक्यं परेण सम्भाव्य न तान् क्षमेत, तादृशी क्षमा दोषायेति च स चक्षीत । एवमापतिता समभावस्यासम्भवनीयता प्रत्याख्यायते तत्त्वमाचक्षाणेन प्रकृत्येति । प्रकृत्या एव च देहेन्द्रियादिरूपेण परिणतया—चास्मदधिष्ठितयेश्वरप्रेरितयेति श्रीमद्बलदेवः—सर्व्वशः सर्व्वप्रकारैः क्रियमाणानि कर्म्माणि, तथात्मानमकर्त्तारं तत्तत्कर्म्मभिरपरामृष्टं यः पश्यति स पश्यति तत्त्वं प्रत्यक्षीकरोति—सर्व्वत्र समं पश्यतीति पूर्व्वेणान्वय इति श्रीमन्नीलकण्ठः । किमत्र तत्त्वम् ? देहेन्द्रियादिस्वभावात् क्रियमाणानि कर्म्माणि न पुनरात्मन्यारोपितव्यानि, तैस्तस्य भिन्नत्वात् । प्रकृतेर्वश्यतामुपागच्छन्नात्मा विषयानुपभुञ्जानो यदपि रागाद्यधीनस्तथापि न तत् स्वरूपकृतमिति जानता न तस्मिन् विषमदृष्टिः कर्त्तव्या । रागादिवशाद्येऽपराधास्तस्मिन्नुपतिष्ठन्ते तानाक्षिपताप्यात्मा स्वरूपत एव ग्रहणीयः, न तु प्रकृत्याविष्टभावत्वेन । न

यदा भूतपृथग्भावमेकस्थमनुपश्यति।
अतएव च विस्तारं ब्रह्म सम्पद्यते तदा ॥३०॥
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥

किं प्रकृतिकर्म्माणि तदनुमोदनं विना सिद्धान्तीत्यनमन्नुत्वाच स समार्ह इति चेत्, करुणार्हः स पुनरवश्यमस्त्व्यः विस्मृतस्वरूपतया दुर्गतत्वात्। एवं सिध्यति समभावेन दर्शनमात्मनः। २९।

आत्मनो ज्ञानाकारेणैकत्वात्तत्र समदर्शनं सम्भवति, न तु भूतानां स्थिरचराणां, यतस्तेषां बहुत्वमेव स्वाभाविकम्। तथा सति न तेषु समदृष्टेर्व्यवस्था युज्यते, तत्राह यदेति। यदा भूतपृथग्भावं भूतानां चराचराणां विच्छिन्नत्वे कत्वेऽपि पृथग्भावं पृथक्त्वं देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिकम् एकस्थं प्रकृतिस्थं प्रकृतिक्रियाजन्यम, अतः प्रकृतित एव विस्तारमुत्तरोत्तरविविधभावेन प्रकटनमनुपश्यति, तदा भगवच्छक्त्येकत्वदर्शनवेलायां ब्रह्म सम्पद्यते ब्रह्मणा सम्पन्नो भवति ब्रह्मणैकत्वं भजते। एकस्थमित्यत्र एकस्मिन्नात्मनि स्थितमिति श्रीमच्छङ्करस्तदनुयायिनश्च। श्रीमन्माध्वोऽप्याह—"एकस्थमेकस्मिन् विष्णौ स्थितम, तत एव च विष्णोर्विस्तारम" इति। "सर्व्वभूतानि चात्मनि" (६।२९) इति योगयुक्तावस्थायां तथा दर्शनम, अत्र तु चेतसैवञ्चतत्त्वोद्भावनेन तद्विज्ञानात् भगवद्भावप्राप्तिरिति प्रतिज्ञानात् श्रीमद्रामानुज-श्रीधरप्रभृतीनां पक्ष एवात्र परिगृहीतः। कथं भगवच्छक्तौ भूतानामेकत्वदर्शनेन ब्रह्मसम्पन्नतेति विवेच्यम्। ज्ञानाकारेणात्मन एकत्वदर्शनेन परमात्मदर्शनं भवति, परमात्मनि तस्यांशत्वेन स्थितेरुपलभ्यमानत्वात्, एवं भगवच्छक्तौ प्रकृतौ सर्व्वेषां भूतानामेकत्वदर्शनेन तच्छक्तेर्भगवदाश्लिष्टत्वेन स्थितत्वात्, भवति तस्यां भगवान् साधकस्योपलब्धेर्विषयः। प्रकृतिपुरुषयोर्विवेकस्येदमेव प्रयोजनम्। ३०।

पूर्व्वं यथा प्रकृतिं पुरुषञ्चाभिधाय "उपद्रष्टानुमन्ते"त्यादिभिः

परमात्मानमुद्दिष्टवान्, तथैवात्र प्रकृतिपुरुषतत्त्वाभिधानानन्तरं परमात्मतत्त्वमवतारयत्यनादित्वादिति । अयं नित्यप्रत्यक्षः सर्व्वेषां प्राणिनां नित्यापरोक्ष इति श्रीमन्नीलकण्ठः—परमात्मा—परमो देहादिभ्योऽपरेभ्य आत्मभ्योऽन्यः कोषपञ्चकातीत आत्मा परमात्मा इति श्रीमन्नीलकण्ठः—अव्ययः सर्व्वविकारशून्यः—न व्येति परिच्छिद्यते देशतः कालतो वस्तुतश्चेत्यव्यय इति श्रीमन्नीलकण्ठः । कथम् ? अनादित्वात् । आदिः कारणं तद्यस्य नास्ति सोऽनादि तस्य भावोऽनादित्वं तस्मादनादित्वात् सर्व्वकारणकारणत्वात् न व्येति रूपान्तरतां न भजते । तस्यां रूपान्तरतायां कार्य्यत्वापत्तिः । कार्य्याणां कारणत्वं हि गौणं सर्व्वकारणकारणस्य तु मुख्यम् । निर्गुणत्वात् गुणातीतत्वात् । गुणानामपाये तद्वस्तुनोऽपायो भवति, सोऽस्मिन् सम्भवत्यतो न व्येति न विकारमधिगच्छति । गुणानां साङ्कर्य्ये परस्परविरोधसम्भावना, एकस्यानन्तत्वे तेनापरस्य सङ्कोचात् । एवं या विकारसम्भावना न सास्ति निर्गुणत्वात् । एवं सति कथं तस्यानन्तकल्याणगुणत्वम् ? तत्त्वेकस्य चित्स्वरूपस्य विविधसम्बन्धेदर्शनरीत्येति पूर्व्वमुक्तम् (२५६पृ,) । अयं परमात्मा शरीरस्थोऽपि शरीरं क्षेत्रं (१३।१) तत्स्थोऽपि न करोति, अतो न लिप्यते क्रियाफलेन युज्यते । "उपद्रष्टानुमन्ते"त्यादिभिस्तस्य द्रष्टृत्वमनुमन्तृत्वं स्वीकृतम् । दर्शनक्रियायां न सर्व्वथाकर्तृत्वं पश्यतीति क्रियायाः कर्त्तृत्वात् । भवत्वौदासीन्यं दर्शने, न तथा स्यादनुमन्तृत्वे । अनुमन्ता हि अनुमोदितक्रियाफलभाग्भवति । अत्रोच्यते—फले निराकाङ्क्षाऽस्मिन् शास्त्रेऽक्रियत्वं निर्लिप्तत्वं, तदेव परमात्मनि पूर्णतया विद्यते परिपूर्णस्वरूपत्वात् नित्यतृप्तत्वाच्च । श्रीमद्बलदेवस्तु श्लोकमिमं परम् आत्मेति पदं विभज्य व्याख्यातवान्, तन्न रुचिरम्, यतस्तेनापि "उपद्रष्टानुमन्ता" इत्यत्र परमात्मा परिगृहीतः । एकत्र प्रकृतिपुरुषयोरुक्तेरानन्तरं परमात्मोक्तेः स्वीकृत्यान्यत्र तदकरणमशोभनमेव । ३१ ।

यथा सर्व्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्व्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥

अधुना जीवात्मपरमात्मनोरकर्त्तृत्वं निर्लिप्तत्वं साधारणधर्मौ वक्तुं श्लोकद्वये आत्मेति क्षेत्रीति तद्वाचकसाधारणशब्देन किमिव न करोति न लिप्यत इति दृष्टान्तेनावगमयति । प्रथमन्तावन्निर्लेपं प्रतिपादयत्याकाशदृष्टान्तेन यथेति । यथा सर्व्वगतं सर्व्ववस्तुभिः संयुक्तमाकाशं सौक्ष्म्यात् सूक्ष्मभावादसङ्गस्वभावत्वान्निरवयवत्वात् नोपलिप्यते सर्व्ववस्तुस्वभावैर्न सम्बध्यते, तथा देहे क्षेत्रे सर्व्वत्र देवमनुष्यादाववस्थित आत्मा न उपलिप्यते न सम्बध्यते । ३२ ।

असङ्गत्वान्निर्लिप्तत्वमाकाशदृष्टान्तेन प्रदर्शयन् प्रकाशक्रियाकर्त्तृत्वेऽपि प्रकाश्यधर्म्मैर्निर्लिप्तस्यादित्यस्य दृष्टान्तेन न करोति न लिप्यत इति क्रियाद्वयस्य नायुक्तत्वं समर्थयति यथेति । यथा एको रविः कृत्स्नमिमं लोकं प्रकाशयति स्वप्रभया, तथा हे भारत, एकः क्षेत्री कृत्स्नं क्षेत्रं प्रकाशयति । अत्र श्रीमन्नीलकण्ठः—"यथा सूर्य्यः स्वसत्तामात्रेण विश्वं प्रकाशयति, न तु व्यापाराविष्टतया कुविन्द इव पटं, यथा चैष प्रकाश्यधर्म्मैर्दुर्गन्धादिभिर्न लिप्यते, एवमयं क्षेत्री क्षेत्रज्ञः सूर्य्यवदेकः सन् अनेकधाभूतं क्षेत्रं 'महाभूतानि' इत्यादिना चतुर्व्विंशतितत्त्वात्मकमिच्छाद्वेषादिविकारयुक्तमुक्तम्, तत् स्वसत्तामात्रेण प्रकाशयति, हे भारत, न तु व्यापाराविष्टतया तत् सम्पादयति, तद्धर्म्मैर्वा पुण्यपापादिभिर्न लिप्यते । सूर्य्यदृष्टान्तेन एकत्वमकर्त्तृत्वप्रयुक्तमलेपत्वञ्च दर्शितम् ; तथाच श्रुतयः—'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥' 'सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्व्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥' इति ।" ३३ ।

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥३४॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ।

इदानीमध्यायार्थं सफलमुपसंहरति क्षेत्रेति । ज्ञानचक्षुषा शास्त्राचार्य्योपदेशात्मप्रत्ययजनितेन एवं क्षेत्रक्षेत्रज्ञयोरन्तरं वैलक्षण्यं भूतप्रकृतिमोक्षञ्च भूतानां प्रकृतिः ततो मोक्षम् अमानित्वादिसाधनोपायेन वियोगं तदभिनिवेशत्यागं ये विदुर्जानन्ति ते परं परमात्मानं यान्ति प्राप्नुवन्ति । क्षेत्रे प्रकृतावभिनिविष्टस्य क्षेत्रज्ञस्य पुरुषस्य न केवलमात्मवैमुख्यं भगवद्वैमुख्यमपि तेन भवति । तत्राभिनिवेशं परिहृत्य यदा हि क्षेत्रज्ञ आत्मज्ञानेऽभिनिविष्टस्तदात्मानं परमात्मनि प्रविष्टं पश्यन् कृतार्थतामेतीति फलितार्थः ।

अध्यायतात्पर्य्यमाह श्रीमद्गिरिः—"अमानित्वादिनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्व्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिः" इति ; श्रीमन्नरहरिः—"इदमत्र तात्पर्य्यम् ;—अमानित्वादिज्ञानसाधननिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यज्ञानमात्रवतः पुरुषस्य सर्व्वानर्थमूलमखिलासाज्ञाननिवृत्त्या स्वस्वरूपेणावस्थानलक्षणामुक्तिरिति" इति ; श्रीमद्बलदेवः—"जीवेशौ देहमध्यस्थौ तत्राद्यो देहधर्म्मयुक् । बध्यते मुच्यते बोधादिति ज्ञानं त्रयोदशात् ॥" इति । ३४ ।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये त्रयोदशोऽध्यायः ।

---

# चतुर्द्दशोऽध्यायः ।

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्व्वे परां सिद्धिमितो गताः ॥१॥

पूर्व्वाध्याये क्षेत्रक्षेत्रज्ञयोर्ज्ञानं परमात्मतत्त्वञ्चोपदिष्टवान् । तत्र "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥" (१३।२१) इति गुणानां पुरुषभोग्यत्वं तेषाञ्च सदसद्देहत्वमुक्त्वा न तद्विवृतवान्, क्षेत्रक्षेत्रज्ञयोः परमात्मपरतन्त्रत्वञ्च नोक्तवान् स्पष्टतरवाक्येन । आरभ्यमाणाध्याये तदेव वक्तुमुपक्रमते । आह च श्रीमच्छङ्करः—"सर्व्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इति उक्तं, तत् कथमिति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते, अथवा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं, न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थम् । प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तम्, कस्मिन् गुणे, कथं सङ्गः, के वा गुणाः, कथं वा बध्नन्तीति, गुणेभ्यश्च मोक्षणं कथं स्यात्, मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थञ्च" इति । श्रीमद्रामानुजः—"त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञाय अमानित्वादिभिर्भगवद्भक्त्यनुगृहीतैर्बन्धान्मुच्यत इत्युक्तम् । तत्र बन्धहेतुः पूर्व्वपूर्व्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति । अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्त्तनप्रकारश्चोच्यते" इति । श्रीमन्माध्वः—"साधनं प्राधान्येनोत्तरैरध्यायैरुक्तं" इति । श्रीमच्छ्रीधरः—"पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः । प्राह संसारवैचित्र्यं विस्तरेण चतुर्द्दशे ॥ 'यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि' इत्युक्तं, स च

क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरसांख्यानामिव न स्वातन्त्र्येण, किन्त्वी-श्वरेच्छयैवेति कथनपूर्व्वकं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवंभूतं वक्ष्य-माणमर्थं स्तौति" इति । श्रीमद्बलदेवः—"पूर्व्वाध्याये मिथः संपृक्तानां प्रकृतिजीवेश्वराणां स्वरूपाणि विविच्य ज्ञानम् अमानित्वादिधर्म्मवि-शिष्टः प्रकृतिबन्धाद्विमुच्यते बन्धहेतुश्च गुणसङ्ग इत्युक्तम् । तत्र के गुणाः, कस्मिन् गुणे कथं सङ्गः, कस्य गुणस्य सङ्गात् किं फलं, गुण-सङ्गिनः किं वा लक्षणं, कथं वा गुणेभ्यो मुक्तिरित्यपेक्षायां वक्ष्यमाण-मर्थमात्मरुच्युत्पत्तये भगवान् स्तौति" इति । श्रीमन्मधुसूदनः—"पूर्व्वाध्याये 'यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्र-क्षेत्रज्ञसंयोगात् तद्विद्धि' इत्युक्तम् । तत्र निरीश्वरसांख्यनिराकरणेन क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वं वक्तव्यम् । एवं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तम्—एकस्मिन् गुणे कथं सङ्गः, के वा गुणाः, कथं वा ते निबध्नन्तीति वक्तव्यम् । तथा 'भूतप्रकृतिमोक्षञ्च ये विदु-र्यान्ति ते परम्' इत्युक्तम्—तत्र भूतप्रकृतिशब्दितेभ्यो गुणेभ्यः कथं मोक्षणं स्यात्, मुक्तस्य च किं लक्षणमिति वक्तव्यम् । तदेतत्सर्व्वं विस्तरेण वक्तुं चतुर्दशोऽध्याय आरभ्यते" इति । श्रीमन्नीलकण्ठः—"पूर्व्वाध्यायान्ते 'भूतप्रकृतिमोक्षञ्च ये विदुस्ते परं यान्ति' इत्युक्तम् । तत्र का वा भूतप्रकृतिः, किमाश्रयेण तस्या भूतजनकत्वं, कथं वा बन्धकत्वं कथञ्च ततो मोक्षः, किञ्च मुक्तानां लक्षणम् इत्येतदर्थजातं विवरीतुं चतुर्दशोऽध्याय आरभ्यते" इति । श्रीमद्विश्वनाथः—पूर्व्वा-ध्याये 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तम् । तत्र के गुणाः, कीदृशो गुणसङ्गः, कस्य कस्य गुणस्य सङ्गात् किं किं फलं स्यात्, गुणयुक्तस्य किं किं लक्षणं, कथं वा गुणेभ्यो मोचनम् इत्यपे-क्षायां वक्ष्यमाणमर्थं स्तुवानो वक्तुं प्रतिजानीते" इति । परमिति । ज्ञानानां ज्ञानसाधनानाममानित्वादीनां—प्रकृतिविषयकाणामिति श्रीमद्बलदेवः—मध्ये परमुत्तममित्युत्तमं—परं पूर्व्वोक्तादन्यं प्रकृति-

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

जीवात्मगतमेव गुणविषयकमुत्तमं श्रेष्ठं नवनीतवदुद्धृतत्वादिति श्रीमद्बलदेवः—ज्ञानं ज्ञायतेऽनेनेति ज्ञानं ज्ञेयप्रकाशकं परमात्मसाधनमुपदेशं वा वक्ष्यामि ; यज्ज्ञात्वा मुनयो मननशीलाः तत्त्वानुध्यानशीलाः इतो देहबन्धनात् परां सिद्धिं गताः प्राप्ताः । १ ।

कथं परां सिद्धिं गता इत्युच्यते इदमिति । इदं ज्ञेयप्रकाशकं ज्ञानमुपाश्रित्य उपायत्वेन गृहीत्वा जीवात्मानः ममान्तर्यामिणः साधर्म्यं स्वरूपैक्यमागताः सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते रूपान्तरतां न भजन्ते प्रलये जगदुपसंहरणसमये न च व्यथन्ति न स्वरूपविच्युता भवन्ति । क्षेत्रक्षेत्रज्ञयोः प्रेरयिता परमात्मा । तत्प्रेरणया प्रकृतिश्चराचरं सूयते । चराचरोत्पत्तौ सत्त्वरजस्तमोगुणाः सर्व्वत्र प्रविष्टाः सर्व्वेषां विचित्रतामुत्पादयन्ति । तेषां गुणानां क्रियाभूमिः जगच्छरीरञ्च । जीवाः पुनस्तटस्थतया स्थिताः । एवमतः सकार्य्यप्रकृतिरन्यतः परमात्मा । एतयोरान्यान्यामभिनिविष्टा देहधर्म्मेणाबद्धा गुणाधीनत्वमुपगच्छन्ति, अन्यस्मिंस्तु स्वरूपैक्यं भजन्ति तेनेति ज्ञानं लब्ध्वा यदा गुणसङ्गं परित्यज्य परमात्मन्यभिनिविष्टचित्तास्तदा रूपान्तरतां स्वरूपविच्युतिञ्चातिक्रम्य कृतार्था भवन्तीति फलितार्थः । इदं पद्यमाश्रित्य गीतातात्पर्य्यनिर्णये श्रीमदानन्दतीर्थेन "न च जीवेश्वरैक्यं मुक्तावपि" इति यदुक्तं तत्पूर्व्वमुद्दिष्टम् । श्रीमद्बलदेवश्चाह—"मोक्षे जीवबहुत्वमुक्तम्" इति । श्रीमच्छङ्कर आह—"साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्म्मतां साधर्म्यं क्षेत्रक्षेत्रज्ञयोर्भेदानभ्युपगमात् गीताशास्त्रे ; फलवादश्चायं स्तुत्यर्थमुच्यते—सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः" इति । अत्र श्रीमद्धरिः—"ज्ञानस्तुतये तत्फलस्य विवक्षितत्वाच्च मात्र सारूप्यमिष्टम् । सारूप्ये

चोपकल्पं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येत ।" इति । श्रीमधुसूदनः —"इदं यथोक्तं ज्ञानं ज्ञानसाधनमुपाश्रित्यानुष्ठाय मम परमेश्वरस्य साधर्म्यं मद्रूपतामत्यन्ताभेदेनागताः प्राप्ताः" इति । श्रीमन्नीलकण्ठः —"इदं ज्ञानं विषयविषयिरूपविकल्पविनिर्मुक्तमुपाश्रित्य ममेश्वरस्य साधर्म्यं सर्व्वात्मत्वं सर्व्वनियन्तृत्वं सर्व्वभावाधिष्ठातृत्वमित्यादि धर्म्मसाम्यं साधर्म्यमागताः, तथाच श्रुतयः—'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्व्वं भवति' 'सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः स न साधुना कर्म्मणा भूयान् नो वासाधुना कनीयान्' इति ।"

अत्रेदं विवेच्यम् । श्रीमद्रामानुजः शारीरकभाष्ये आह—"नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः, अविद्याश्रयत्व-योग्यस्य तदनर्हत्वासम्भवात् । यथोक्तम् 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्रव्यं हि नैति तद्द्रव्यतां यतः ॥' मुक्तस्य तु तद्धर्म्मतापत्तिरिति भगवद्गीतायामुक्तम्—'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति । अत्रापि 'आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने । विकार्य्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥' इति । 'आत्मभाव' मात्मनः स्वभा-वम् । न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य" इति । एवमपि चिदाकारेणैक्यं तेनापि तत्रैव स्वीकृतं तद्यथा—"प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया प्रकारतोच्यते । प्रकारैक्येण तत्तद्व्यवहारो मुख्य एव यथा सेयं गौरिति ।" इति । वयन्तु स्वरूपैक्यं चित्स्वरूपस्य ब्रह्मणः चिदणुरूपस्य च जीवस्य चित्-स्वरूपे चिदणोश्चिदणौ चित्स्वरूपस्य च प्रवेशान्मन्यामहे, न तु द्वयो-रेकतरस्याभावात् । "य एवं वेद अहं ब्रह्मास्मीति स इदं सर्व्वं भवति" (वृ, आ, १।४।१०) इत्यस्या अग्रे "तद्यो यो देवानां प्रत्यबु-ध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम् । तद्धैतत् पश्यन्नृ-षिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्य्यश्चेति" इत्युक्तेः चित्स्वरूपावेशेन सर्व्वैरैक्यं भवति न तु जीवब्रह्मणोरेकतरस्याभावेन । "प्राप्यस्य प्राप-

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्व्वभूतानां ततो भवति भारत ॥३॥**

मुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥” (वृ, आ, ६।४।१८—२०) इत्यत्र जीवपरात्मनोर्मद्दृष्टेर्निन्दादर्शनात्, अनन्तरोक्ता “सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वस्याधिपतिः स न साधुना कर्म्मणा भूयान्नो एवासाधुना कर्म्मणा कनीयान्” (वृ, आ, ६।४।२२) इत्यस्याः स्वरूपैकत्वसाधकता न पुनर्विरुध्यते स्वरूपाविर्भावे परमात्मनो ज्ञानशक्त्याद्यैशेन तेनैव तस्य परिचयः तेनैव तस्य ज्ञानादेरौज्ज्वल्यम् । “स हि सर्व्ववित् सर्व्वकर्त्ता” (३।५६) “ईदृशेश्वरसिद्धिः सिद्धा” (३।५७) इति कपिलोऽपि पुरुषे श्रुतिसिद्धं सर्व्वज्ञत्वादिकमारोपयति । प्रकृतिपुरुषयोः परमात्मपरतन्त्रत्वात् तं विना स्वरूपशून्यत्वाच्च तत्स्वरूपेण तयोः स्वरूपवत्त्वमिति न जातु वेदान्तमर्य्यादोपदुष्टा । तौ पुनः सत्यस्वरूपस्य चिद्विलासत्वात् नासत्यौ भवितुमर्हतः । “सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः” (छा, उ, ६।४।८) इत्यादयः श्रुतय एव तत्र प्रमाणम् । आचार्य्योऽप्याह—“असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्” (१६।८) ; “सत्यं भूतमयं जगत्” (अ, गी, २५अ, २५श्लो) इति । २ ।

प्रकृतिपुरुषयोः सर्व्वभूतोत्पत्तौ हेतुत्वं परमात्माधीनमित्याह ममेति । महत् अनन्तस्य शक्तिरूपत्वात् देशतः कालतोऽपरिच्छिन्नं बृहत्त्वात् बृंहणत्वात् वृद्धिहेतुत्वात् ब्रह्म अपरा प्रकृतिः मम सर्व्वान्तर्यामिणो योनिः सर्व्वभूताभिव्यक्तिस्थानम् । तस्मिन् महति ब्रह्मणि योनौ गर्भं परप्रकृतिभूतं जीवं—हिरण्यगर्भस्य जन्मनो वीजं सर्व्वभूतजन्मकारणं वीजमिति श्रीमच्छङ्करः, चेतनपुञ्जमिति श्रीमद्रामा-

गुणनिमज्जनार्थौ, चिदाभासमिति श्रीमच्छ्रीधरः, परमाणुचैतन्यराशि-मिति श्रीमद्बलदेवः, ईक्षणरूपं सङ्कल्पमिति श्रीमन्मधुसूदनः, स्वप्रति-बिम्बरूपमिति श्रीमन्नीलकण्ठः—दधामि निक्षिपामि क्षेत्रेषु बीजं योजयामि विषयविषयिसम्बन्धमुत्पादयामि, ततः क्षेत्रक्षेत्रज्ञसंयोगात् सर्व्वभूतानां, हे भारत, सम्भव उत्पत्तिर्भवति। अत्र श्रीमद्बलदेवस्य परमाणुचैतन्यराशिः, श्रीमन्मधुसूदनस्य ईक्षणरूपसङ्कल्पः, श्रीमन्नील-कण्ठस्य स्वप्रतिबिम्बः, "ययेदं धार्य्यते जगत्" (७।५) इत्युक्तेः सूक्ष्म-भावमभिव्यनक्ति। अणुचैतन्यानां नित्यत्वे तैः सह प्रकृतेः सम्बन्धात् परात्मप्रेरणया भूतानामुत्पत्तिरिति प्रथमः पक्षः, अणुचैतन्यानां प्रकृति-सम्बन्धादेकविधैव सृष्टिः स्यात् यदि न भगवत्सङ्कल्पप्रेरणया सा भिन्न-तामपेयात्। अणुचैतन्यानां भगवत्सङ्कल्पमयत्वात् देवमनुष्यपशुकीटा-दिकं सर्व्वं भिन्नभिन्नसङ्कल्पतो भिन्नाकारं लभते। एवमप्यणुचैत-न्यानां न जातु महत्त्वं स्यात् यदि न परमात्मस्वरूपावेशात् तत्प्रति-बिम्बत्वं स्यात्।

अथ पुनर्विवेच्यम्;—"यन्तु कर्म्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः। स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः॥ हिंस्राहिंस्रे मृदु-क्रूरे धर्म्माधर्म्मावृतानृते। यद्यस्य सोऽदधात् सर्गे तत्तस्य स्वयमावि-शत्॥" (मनु, १अ, २८।२९श्लो) इत्यत्र हिंस्रत्वं क्रूरत्वमधर्म्मोऽनृतञ्च भगवत एवेति न तैर्जीवानामधोगतिर्भवितुमुचितेति विप्रतिपत्तौ, व्याघ्रादिषु हिंस्रत्वं क्रूरत्वं न दोषाय जीविकामात्रोपायत्वात्तयोः, तैर्व्यापादितानां प्राणात्ययः स्वदेहदानेन परपोषणं व्यनक्तीति सोऽपि न दोषाय, मानवे ते पापाय सर्व्वान्तर्यामिणा प्रतिषिद्धत्वात्। अधर्म्म-स्यानृतस्य चोत्थः आलोकान्धकाराविव धर्म्मस्याभावोऽधर्म्मः, ऋत-स्याभावोऽनृतमिति तयोरेकतरे भगवता प्रवर्त्तितेऽन्यस्य जीवनिष्ठशक्त्य-भावादन्धकारवत्प्रवृत्तिः। न च जीवानां सर्व्वशक्तिमत्त्वं, सुतरां शक्त्य-भावेऽवश्यम्भाविनि तयोः सम्भावना सर्व्वथास्तीति धर्म्माधर्म्मयोः ऋता-नृतयोः सहभावित्वमुपदिष्टम्। २।

सर्व्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद्‌योनिरहं बीजप्रदः पिता ॥४॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥

न केवलं क्षेत्रक्षेत्रज्ञयोजनायैव परमात्मप्रेरणा किन्तर्हि सृष्टिपरम्परायामपि साभ्युपगन्तव्येत्याह सर्व्वयोनिष्विति । हे कौन्तेय, सर्व्वयोनिषु देवमनुष्यपशुपक्ष्यादिषु या मूर्त्तयः विविधसंस्थानलक्षणास्तनवः सम्भवन्ति जायन्ते, तासां महत् ब्रह्म प्रकृतिर्योनिरुत्पत्तिस्थानं, मातृस्थानीया सा ; अहं सर्व्वान्तर्यामी बीजप्रदः चेतनवर्गस्य संयोजकः पिता । अनेन जीवमात्रस्य सन्तानस्थानीयस्य पिता परात्मेति जीवपरयोर्नित्यसम्बन्ध उक्तः । ४ ।

एवं देहसंयुक्तस्य जीवस्य कुतो बन्धनमित्याह सत्त्वमिति । सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः प्रकृतिसमुत्पन्नाः तस्याः क्रियाविशेषाः देहिनं जीवमव्ययं रूपान्तरताविहीनं सदैव चिद्रूपं देहे निबध्नन्ति देहाभिनिवेशवन्तं कुर्व्वन्ति सुखदुःखादिभिः संयोजयन्ति ।

"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" (१।६१) इति कपिलसूत्रस्य "अकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिः" इत्यर्थे निष्पन्ने गुणानामेव वस्तुत्वं प्रकृतिस् तेषां 'न्यूनाधिकभावेनासंहतावस्था' ; तत्कथं 'गुणाः प्रकृतिसम्भवाः' इत्युक्तिः । प्रकृतिर्हि शक्तिः क्रियात्मिका व्यक्तिप्रवृत्त्यप्रवृत्तिरूपा उभयथापि निर्व्वक्तुमुचिता, सद्‌यथा — क्रियाया अप्रवृत्तिः प्रथमावस्था, प्रवृत्तिर्द्वितीयावस्था, ततोऽस्या व्यक्तिः प्रकाशस्तृतीयावस्था, अतएवैकस्याः क्रियात्मिकायाः प्रकृतेरवस्थात्रयमेव गुणास्तद्भूता इति प्रकृतिसम्भवत्वं तेषाम् ; पक्षान्तरे व्यक्तिप्रवृत्त्यप्रवृत्तीर्विना न जातु शक्तिस्तिष्ठति, अकार्य्यावस्थायां तासां तत्साम्यं तदेव शक्त्यपरपर्य्याया प्रकृतिः । ननु शक्तिर्हि प्रवृत्तिरूपा, कथं तस्या अप्रवृत्त्यवस्था सम्भवति ? अवरोधेऽपि शक्तेः प्रयोजनं दृष्टा अवरोधरूपाप्रवृत्तिः सम्भ-

**तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥६॥**

वस्त्वेव तत्त्वाम् । वस्तुमात्रं हि अभिव्यक्तेः पूर्व्वं शक्त्यावरणावस्थायां तिष्ठति, अभिव्यक्त्युन्मुखे प्रवृत्तिरूपमिष्यते, तदनन्तरं यथासमयं भवत्यस्य व्यक्तिः । एवं सर्व्वत्रास्यावस्थात्रयस्य साम्राज्यं दृष्ट्वा प्रकृतौ गुणत्रयस्य सन्निवेशः । "गुणशब्दः.........पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्म्मातृत्वाच्च प्रयुज्यते" इत्युक्तिर्निःसमञ्जसा, पुरुषस्याप्यप्रवृत्तितः प्रवृत्तिः, प्रवृत्त्यनन्तरं स्वस्य प्रवृत्तिविषयस्य व्यक्तिरिति तदधीनता नित्यमेव । अत एषा व्यक्तिप्रवृत्त्यप्रवृत्तिरूपा रज्जुस्तं वस्तुमात्रञ्च निबध्नातीति सिद्धान्तो रुचिर एव । अप्रवृत्तितः प्रवृत्तिः प्रवृत्तितो व्यक्तिरिति क्रममनभिनन्द्य कथं व्यक्तिः प्रवृत्तिरप्रवृत्तिरिति क्रमः शास्त्रे परिगृहीतः ? व्यक्तेरेवानुसन्धानसम्भावना नाव्यक्तेरिति व्यक्तेर्व्युत्क्रमेण प्रथमग्रहणम् । प्रवृत्तिस्तु पर्य्यवेक्षणयोग्यापि यावन्नाभिव्यक्तिः, किमिदं भविष्यतीति न बुद्धौ प्रतिभासते, अतस्तस्या मध्यमस्थानमप्रवृत्तेस्तु चरमम् । एवञ्च तमो रजः सत्त्वमिति क्रममुपेक्ष्य सत्त्वं रजस्तम इति गुणानामुल्लेखः । सृष्टेः प्रागवस्था शक्तिरप्रवृत्तिप्रधाना, सुतराम् "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः ॥" ( मनु, १अ, ४श्लो ) इत्युक्तिस्सारतरा । शक्तेरनन्तत्वात् तस्यां व्यक्तिप्रवृत्त्यप्रवृत्त्यवस्था नित्यमेव युगपत् स्थातुं शक्यते । "ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान् विद्धि" (७।१२) इत्युक्तात् 'गुणाः प्रकृतिसम्भवाः' इत्युक्तिः प्रकृतिप्रवर्त्तकत्वेन गुणानामपि प्रवर्त्तकत्वं दर्शयतीति न पूर्व्वापरविरोधः । ५ ।

सत्त्वस्य लक्षणं बन्धकत्वप्रकारमाह तत्रेति । तत्र तेषां गुणानां मध्ये सत्त्वं निर्म्मलत्वात् स्वच्छत्वात् प्रकाशकम्, अनामयमुपद्रवशून्यम् । तमस्यप्रवृत्त्यवस्थायां न किञ्चित् परिलक्ष्यते, सर्व्वं तत्रानुद्भूतम्, रजसि प्रवृत्त्यवस्थायां न सर्व्वावयवस्य प्रकाशः, अतएवेषत्परिलक्षितेऽपि न

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥७॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥

तदनुप्रकाशः, सत्त्वं तु व्यक्तावस्थायां सर्वावयवसम्यक्परिस्फुटतामाप-द्यात्मानं दर्शयतीति स्वच्छत्वं तस्य । तमसि न बुद्धेः प्रसरोऽतस्तदुप-हतमयं ; रजस्यपि तथा अनतिपरिस्फुटत्वात् ; सत्त्वे तु बुद्धेः प्रसरो-ऽप्रतिहतः, अतो न काप्युपद्रवस्येन्द्रियव्याघातादिजनितस्य सम्भावना । हे अनघ, सत्त्वं पुनः सुखसङ्गेन सुखासक्त्या, ज्ञानसङ्गेन ज्ञानासक्त्या बध्नाति बन्धनकारणं भवति । सर्वावयवदर्शनेन तस्मिन् यत्सौन्दर्य-मुपलभ्यते तेनाकृष्टचेताः पुरुषस्तस्मिन् सुखमाप्नोति । एवं बुद्धि-प्रसरोपयोगिनि पदार्थे ज्ञानवर्द्धनार्थिता भवतीति ज्ञानासक्तिर्जा-यते । ६ ।

रजसो लक्षणं तस्य बन्धकत्वञ्चाह रज इति । रजो रागात्मकं रागः कामो गर्द्धः स एव आत्मा स्वरूपं यस्य तत् रागहेतुभूतं विद्धि जानीहि । तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः, सङ्गः प्राप्ते प्रीति-लक्षणः संश्लेषः, तयोः तृष्णासङ्गयोः समुद्भवो यस्मात् तत् रजः, हे कौन्तेय, कर्मसङ्गेन कर्मासक्त्या देहिनं बध्नाति । प्रवृत्तिप्रधानत्वात् कर्मासक्तिरेव । ७ ।

तमसो लक्षणं तस्य बन्धकत्वञ्चाह तम इति । तमस्तु अज्ञानजम् अज्ञानजातं—यत्र ज्ञानं नास्ति तत्र न जातु प्रवृत्तिर्भवति अतोऽप्र-वृत्तिप्रधानमेव तमः—विद्धि जानीहि । सर्वदेहिनां मोहनं मोहकर-मविवेककरं भ्रान्तिजनकम्, अतएव प्रमादालस्यनिद्राभिः प्रमादोऽन-वधानम्, आलस्यमनुद्यमः, निद्रा सर्वेन्द्रियप्रवर्त्तनोपरमः तैः तत् तमः, हे भारत, देहिनं निबध्नाति । ८ ।

**सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ।**

**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥९॥**

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**

**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥**

गुणानां सङ्क्षेपतः कार्य्यमाह सत्त्वमिति । हे भारत, सत्त्वं सुखे, रजः कर्म्मणि सञ्जयति संश्लेषयति, तमस्तु ज्ञानमावृत्य प्रमादे उत आलस्यादौ सञ्जयति । सत् मूलोपादानं ब्रह्म वा तद्भावः सत्त्वम् । रजो रञ्जकात्मकं तत्तद्विषयानुरागमूलम्, तमः ग्लान्यात्मकमवसादकम् ; सुतरां सत्त्वप्राधान्ये मूलोपादानस्य ब्रह्मणः सुखरूपत्वात् सुखेऽभिनिवेशः स्वभावतो भवति ; रजःप्राधान्ये विषयानुरागस्तत्प्राप्तौ जनं प्रयोजयति, सुतरां कर्म्मण्यभिनिवेशो जायते ; तमःप्राधान्ये ग्लानिरूपतिहते, सुतरां प्रमादालस्यादेरुद्रेकः । सत्त्वं शुद्धसत्त्वमिति शास्त्रीयप्रभेदः, एतेन जगति प्रकाशमानमपरं तदतीतं स्वयं ब्रह्म इन्द्रियविषयं भवतीति बोध्यम् । ९ ।

सर्व्वत्रैव गुणानां सङ्करस्तत्कथं 'सत्त्वं सुखे सञ्जयति' इत्याद्युक्तिस्तत्कारणमाह रज इति । हे भारत, रजः तमश्च अभिभूय स्वप्रभुतया तिरस्कृत्य सत्त्वं भवति वर्द्धते, सत्त्वं तमश्चैव अभिभूय रजो भवति वर्द्धते, तथा सत्त्वं रजः अभिभूय तमो भवति वर्द्धते । यद्यपि सत्त्वरजस्तमोगुणानां सर्व्वत्रैव सङ्करः, तथापि तेषां ह्रासवृद्धी कर्म्मभिर्भवतः ; अन्यथा मतिप्रयोजकानां शास्त्राणामानर्थक्यं स्यात्, जन्मकालेऽनुभूतानां गुणानामारम्भकाणां पर्य्योदयासम्भवात् अधर्म्माद्धर्म्मे समुत्थानं धर्म्मादधर्म्मे निपतनं न भवेत्, अवनत्युन्नतिपरम्परा च व्याहन्येत । "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥" (२।४५) इत्युपदेश आचार्य्यस्यैवमेव सिध्यति । १० ।

सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥
लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥

केन वा ज्ञायते सत्त्वं विवृद्धमिति तदाह सर्व्वद्वारेष्विति । अस्मिन् देहे सर्व्वद्वारेषु श्रोत्रादिषु ज्ञानद्वारेष्विन्द्रियेषु प्रकाशो व्यक्तावस्था यथायथवस्तुग्रहणसामर्थ्यमिति यावत् उपजायते उद्भूयते, तेन च यदा ज्ञानं शब्दादिविषयाणां याथात्म्येन बोधविषयत्वं जायते तदा सत्त्वं विवृद्धं विद्यात् जानीयात्, उत सुखादिलिङ्गेन । एतदुक्तं भवति, रजःप्रधानस्य वासनोद्रेकात्, तमःप्रधानस्य च मोहाभिभूतत्वात् यथायथं वस्तुतत्त्वग्रहणेऽसामर्थ्यम् । वासनाविकाररहितस्य मोहानभिभूतस्य ज्ञानेन्द्रियाणि मनसा यथावद्वस्तुग्रहणे, तैः प्रेरितानि कर्म्मेन्द्रियाणि च यथावद्विषयसम्बन्धरचणे समर्थानि भवन्ति । अत एतल्लक्षणेन सत्त्वं प्रवृद्धमिति ज्ञायते । ११ ।

केन वा ज्ञायते रजो विवृद्धमिति तदाह लोभ इति । लोभः परद्रव्यादिष्वभिलाषः, प्रवृत्तिर्नित्यं कुर्व्वद्रूपा, कर्म्मणामारम्भ उद्योगः, अशम इन्द्रियानुपरतिः, स्पृहा विषयतृष्णा, हे भरतर्षभ, रजसि विवृद्धे एतानि जायन्ते । १२ ।

केन वा ज्ञायते तमो विवृद्धमिति तदाह अप्रकाश इति । अप्रकाशो ज्ञानानुदयः, अप्रवृत्तिरनुद्यमः, प्रमादोऽनवधानं, मोहो विपरीतज्ञानं भ्रान्तिरेव च तमसि विवृद्धे, हे कुरुनन्दन, जायन्ते । १३ ।

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥१४॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढ़योनिषु जायते ॥१५॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

सत्त्वप्रवृद्धौ मृतस्य गतिमाह यदेति । यदा सत्त्वे प्रवृद्धे तु देहभृत् प्रलयं मरणं याति प्राप्नोति तदा उत्तमविदाम् उत्तमानि तत्त्वानि विदन्तीत्युत्तमतत्त्वविदस्तेषां तत्त्वज्ञानाममलान् मलरहितान् लोकान् प्रतिपद्यते प्राप्नोति । सत्त्वे प्रवृद्धे यथावद्विषयग्रहणं भवति । यद्वस्तु यद्भावापन्नं तद्वस्तु तेन भावेन ग्रहणं भगवदभिप्रेतम् । भगवदभिप्रायानुसरणेन वस्तुग्रहणे तेन च सम्बन्धो विशुद्धो भवति, तत्त्वज्ञानञ्च स्फूर्त्तिं लभते । तत एव तत्त्वज्ञानां लोकेषु तादृशां जनानां गतिर्भवति । ननु सत्त्वे प्रवृद्धेऽपि रजस्तमसोर्नात्यन्ताभावः सिध्यति, तत्कथं न तयोरत्र क्रियासन्निवेशः ? सत्त्वाभिभूतयोरजस्तमसोः सत्त्वानुकूलत्वं, तद्यथा सत्कर्म्मणीश्वराभिप्रेते रजसोऽनुकूलता, असद्विषयस्मृतिप्रमोषे तमस इति न तयोः पृथङ्निर्द्देशः । रजसाभिभूतयोः सत्त्वतमसोस्तमसाभिभूतयोश्च सत्त्वरजसोरेवं न तदानुगत्यं बोध्यं प्रकाशाप्रकाशप्रवृत्तियोगात् । १४ ।

रजसस्तमसश्च प्रवृद्धौ मृतस्य गतिमाह रजसीति । रजसि प्रलयं मरणं गत्वा प्राप्य कर्म्मसङ्गिषु कर्म्मासक्तेषु जायते, तथा तमसि प्रलीनो मृतः मूढ़योनिषु पश्वन्मोहाच्छन्नेषु जायते । मरणानन्तरं स्वस्वप्रतिपत्त्यनुसारतो भवति पारलौकिकी गतिरिति फलितार्थः । १५ ।

गुणकृतकर्म्मणां फलमाह कर्म्मण इति । सुकृतस्य कर्म्मणः सात्त्विकं सत्त्वगुणसम्भूतं निर्म्मलं फलं ज्ञानवैराग्यादिकम्, रजसः राजसस्य कर्म्मणः फलं दुःखं नियततृष्णापरवशत्वात्, तमसः तामसस्य कर्म्मणः फलमज्ञानं मोहजनकत्वात् । १६ ।

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥

कथमेवं पृथक् फलं सञ्जायते तत्कारणमाह सत्त्वादिति । सत्त्वात् सत्त्वगुणात् ज्ञानं जायते, तेन च परिणामविरसत्वं विषयाणां जानतो वैराग्यादिफललाभः, रजसो रजोगुणात् लोभः, तेन नित्यापरितृप्तत्वात् दुःखमेव फलम्, तमसस्तमोगुणात् प्रमादमोहौ भवतः, अज्ञानमेव च भवति, तैः पुनर्मूढतावृद्धिः फलम् । १७ ।

गुणोद्रेकादूर्द्ध्वमध्याधोगतीराह ऊर्द्ध्वमिति । सत्त्वस्था ऊर्द्ध्वमूर्द्ध्व-लोकं गच्छन्ति, राजसाः मध्ये मध्यलोके तिष्ठन्ति, जघन्यगुणवृत्तिस्थाः सत्त्वरजोऽपेक्षया निकृष्टवृत्तिस्थाः तामसाः अधः अधोलोकं गच्छन्ति । ऊर्द्ध्वं गच्छन्ति, अधो गच्छन्ति, मध्ये तिष्ठन्तीति वचनात् भूर्लोकमेवा-वलम्ब्योर्द्ध्वाधोनिर्व्वचनमिति व्याख्यातारः । कपिलसूत्रव्याख्यानेऽपि तथा दृश्यते । तद्‌यथा—"ऊर्द्ध्वं सत्त्वविशाला" (३।४८)—"ऊर्द्ध्वं भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवति ।" "तमोविशाला मूलतः" (३।४९)—"मूलतो भूर्लोकादधः" ; "मध्ये रजोविशाला" (३।५०)—"मध्ये भूर्लोके" इति । ऊर्द्ध्वाधोमध्यगता एते सर्व्वे लोका उत्तरो-त्तरजन्मयोगाज्जरामरणादिजदुःखाधीनत्वात् समाना एव । यथोक्तं कपिलेन—"आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः" (३।५२), "समानं जरामरणादिजं दुःखम्" (३।५३) इति । "क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चैतदिष्टं देवानां मर्त्त्यैरुपनिवर्त्तनम् ॥" (म, गी, १९अ, ५९श्लो) इत्यादिभिराचार्य्यवचनैस्तत्तल्लोकानां समत्व-मेव व्यज्यते । सर्व्वेषैव क्रियावतां सत्त्वादूर्द्ध्वाधोगतौ तत्र तत्रावस्थाभा-विन्यौ । सुतरां सिध्यति तत्तन्निवासिनः स्वं स्वं लोकं मध्यस्थं कृत्वा लोकानन्यानूर्द्ध्वाधःस्थितान् परिगणयन्तीति । अतएव श्रीमत्-

**नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥**
**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥**

कपिलेनाचार्य्येण च अहं मयेऽध इति सामान्यशब्देन लोका निर्दिष्टाः । १८ ।

अतीताध्याये "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" (१३।२१) इति महुक्त तत्राध्यायवध्याये गुणानां स्वरूपं बन्धकत्वं गुणजन्यां सर्व्वेषां गतिश्चोक्तवान् । सम्प्रति गुणेभ्यो विमुक्तिं विमुक्तस्य च लक्षणं वक्तुमुपक्रमते नान्यमिति । द्रष्टा जीवः यदा गुणेभ्यः सत्त्वरजस्तमोभ्यः अन्यं कर्त्तारं नानुपश्यति, गुणा एव तत्तत्स्वरूपानुसारिणि कर्म्मणि देहिनं नियोजयन्ति देही तु स्वयमकर्त्ता इति साक्षादनुभवति, गुणेभ्यः सत्त्वरजस्तमोभ्यः परं गुणव्यापारसाक्षिभूतमात्मानं परमात्मानं वा पश्यति, स मद्भावं मम भावं स्वरूपं ज्ञानादिसम्पन्नत्वमधिगच्छति प्राप्नोति । पूर्व्वमेवोक्तं गुणकर्त्तृत्वमात्मनोऽकर्त्तृत्वं तेन च ज्ञानेन ब्रह्मस्वरूपसम्पन्नत्वम् ; अस्मिन् पुनरुल्लेखो गुणविषयकप्रस्तावे विशेषेण गुणातीतत्वलक्षणनिर्व्वचनाय । १९ ।

अनेन ज्ञानेन किं भवतीत्याह गुणानिति । देहसमुद्भवान् देहस्य समुद्भवो येभ्यस्तान् देहसमुद्भवान् देहोत्पत्तिबीजभूतान् एतान् त्रीन् गुणान् सत्त्वरजस्तमोरूपान् अतीत्य अतिक्रम्य देही जीवः जन्ममृत्यु-जरादुःखैर्विमुक्तः अमृतं मोक्षं परमानन्दम् अश्नुते प्राप्नोति । 'देह-समुद्भवान्' इत्यस्य देहजानित्यर्थे निष्पन्ने मातापितृदेहतस्तत्पुत्रकन्या-शरीरेषु गुणानां संक्रमणं बुध्यते । आह च श्रीमत्कपिलः—"माता-पितृजं स्थूलं प्रायश इतरन्न तथा" (३।७) इति । अत्र स्थूलशरीरमेव मातापितृतः समुत्पद्यते, न तु सूक्ष्मशरीरमिति दृश्यते, तच्च "सप्तदशैकं लिङ्गम्" (३।९) इति एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्त-

दश भवतीति सांख्यसिद्धान्तः। आचार्य्यस्तु "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति" (१५।७) इत्युक्त्वा नतु तत् मातापितृतः किन्तर्हि प्रकृतेरेव मनःपञ्चज्ञानेन्द्रियात्मकं जीवो गृह्णातीत्युक्तवान् ।

अत्रेदं विवेच्यम् ;—स्थूलशरीरं मातापित्रुपादाननिर्म्मितमतस्तत्र मातापितृदेहे ये गुणा वर्त्तन्ते त एव सन्ततिदेहं संक्रामन्ति, न पुनर्मनोबुद्धिस्तत्साधनानीन्द्रियाणि, एतानि तु साक्षात्प्रकृतेरीश्वरशक्तेः। यद्यप्यात्मनोऽविकारित्वं स्वतःसिद्धं तथापि स्थूलशरीरगता गुणास्तं निबध्नन्ति। ननु चक्षुरादीनि ज्ञानेन्द्रियाणि गुणकृतान्येव यतस्तानि च शरीरगतान्येव। एव हि स्थूलदर्शिनां सिद्धान्तः। "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (वृ. आ, उ, ४।३।२३) इत्यादाभिः स्थूलचक्षुरादयो देहगता अपि द्रष्टुर्जीवस्यान्तरङ्गा दृष्टिशक्त्यादयः। "मनःषष्ठानि" इति पञ्चज्ञानेन्द्रियेभ्यो मनो विभज्य कथनस्यायमभिप्रायः, एकमेव मनः पञ्चधा वस्तुग्रहणेन पञ्चज्ञानेन्द्रियाकारेण व्यक्तं भवति, न ततो ज्ञानेन्द्रियाणां स्वतन्त्रता। तथैवोक्तं श्रीमच्छङ्करेण "यदेतद्धृदयं मनश्चैतत्" (ऐ, उ, ३।२) इत्यस्या व्याख्यानावसरे ;—"किं पुनस्तदेकमनेकधा भिन्नं करणमित्युच्यते। यदुक्तं पुरस्तात् प्रजानां चेतो हृदयं हृदयस्य चेतो मनो मनसा सृष्टा आपश्च वरुणश्च ; हृदयात्मनो मनसश्चन्द्रमाः। तदेवैतद्धृदयं मनश्च एकमेतदनेकधा। एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति, श्रोत्रभूतेन शृणोति, घ्राणभूतेन जिघ्रति, वाग्भूतेन वदति, जिह्वाभूतेन रसयति, स्वेनैव विकल्पनारूपेण मनसा विकल्पयति, हृदयरूपेणाध्यवस्यति। तस्मात् सर्व्वकरणविषयव्यापारकमेकमिदं करणं सर्व्वोपलब्ध्यर्थमुपलब्धुः। तथा च कौषीतकीनां—'प्रज्ञया वाचं समारुह्य वाचा सर्व्वाणि नामान्याप्नोति, प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्व्वाणि रूपाण्याप्नोति' इत्यादि। वाजसनेयके च—'मनसा ह्येव पश्यति, मनसा शृणोति, हृदयेन हि रूपाणि जानाति' इत्यादि। तस्माद्धृदयमनोवाच्यस्य सर्व्वोपलब्धिकरणत्वं प्रसिद्धम्। तदात्मकश्च प्राणः—'यो वै प्राणः सा प्रज्ञा, या वै प्रज्ञा स

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।
किमाचारः कथञ्चैतांस्त्रीन् गुणानतिवर्त्तते ॥२१॥

श्रीभगवानुवाच—

प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥

प्राणः' इति ब्राह्मणम्। इति।" शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥" (१५।८) इत्यत्र यदप्याचार्य्येण मनःषष्ठैरिन्द्रियैर्गच्छति देहादित्युक्तं, तथापि पञ्चेन्द्रियप्रकाशस्थानं मन एव प्रधानम्। अतएवाह श्रुतिः—"मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" (छा, उ, ८।५।६।१२) इति। २०।

"गुणानेतानतीत्य त्रीन्" इत्युक्तवानाचार्य्यः, अतएव गुणातीतस्य लक्षणमाचारं साधनोपायञ्च पृच्छत्यर्ज्जुनः कैरिति। हे प्रभो, कैर्लिङ्गैर्लक्षणैस्त्रीनेतान् गुणान् अतीतोऽतिक्रान्तो भवति, अयं गुणातीतः किमाचारः कोऽस्याचार इति किमाचारः, कथं केन च प्रकारेण एतान् त्रीन् गुणानतिवर्त्तते अतीत्य वर्त्तते ?। २१।

"कैर्लिङ्गैरेतांस्त्रीन् गुणानतीतो भवति" इति प्रश्नस्योत्तरमाह प्रकाशञ्चेति। हे पाण्डव, प्रकाशं सत्त्वकार्य्यञ्च, प्रवृत्तिं रजःकार्य्यञ्च, मोहनं तमःकार्य्यञ्च सम्प्रवृत्तानि दुःखबुद्ध्या न द्वेष्टि, निवृत्तानि न सुखबुद्ध्या काङ्क्षति 'गुणातीतः स उच्यते' इति चतुर्थेनान्वयः। द्वितीयाध्याये "स्थितप्रज्ञस्य का भाषा" (२।५४) इत्यादिना पृष्टः तत्र

: श्लोकैरुत्तरमाह, अत्र तु पुनः सारसंग्रहणेन। अत्राह श्रीमच्छङ्करः—"मम तामसः प्रत्ययो जातस्तेनाहं मूढः; तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्त्तितः प्रचलितः स्वरूपात् कष्टं मम वर्त्तते योऽयं मत्स्वरूपात् भ्रंशः; तथा सात्त्विको

गुण: प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च सञ्जयन् मां बध्ना-तीति तानि द्वेष्यसम्यग्दर्शित्वेन, तदेवं गुणातीतो न द्वेष्टि सम्प्रवृत्तानि, यथा च सात्त्विकादिपुरुष: सात्त्विकादिकार्य्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति, न तथा गुणातीतो निवृत्तानि काङ्क्षति" इति । ननु सत्त्वेन सुखमनुभूयते, तस्मात्तं सत्त्वकार्य्यं दु:खबुद्ध्या द्वेष: सम्भवति ? श्रीमच्छङ्करस्तु "विवेकित्वमापादयन् सुखेन च सञ्जयन् मां बध्नाति" इत्युत्तरमदात् । न खलु विवेकित्वेन दु:खं न सम्भवतीति वक्तव्यम् ; विवेकाद्दृश्यात्मनो निगूढपापराशीन् पश्यन् साधकस्तीव्रं दु:खमनुभव-तीति निखिलसाधकसाक्षादनुभूति: । यद्यपि पापानि दृष्ट्वा खिन्नस्त-थापि न तदवस्थां स द्वेष्टि, यत: पापनिवृत्ते: सैवोपाय: । वैराग्याद्य-भ्यासेन साधक: सुखमनुभवति, तत्सुखञ्च तदैव बन्धनकारणं भवति यदा तदभ्यास एवोपेयो भवति, न तु तत्प्राप्य: परमात्मा । गुणातीत: पुरुषस्तु वैराग्याद्यभ्यासस्यैव विघ्नकरत्वं पश्यन् न तं द्वेष्टि, प्रत्युतोपा-यत्वेन तं चिरानुवर्त्तनविषयं करोति । रजसा कार्य्योद्यम उपतिष्ठते, तं तु वयं निष्कामा: सन्न्यासिन इत्यभिमानपरवशा न बहु मन्यन्ते, यद्यपि कर्म्मणोऽपरिहार्य्यत्वात् तेऽपि शरीरचेष्टादीनि कुर्व्वन्ति । गुणा-तीतपुरुषस्तु न तथा । आत्मन: कार्य्योद्यमं भगवदाराधनतदाज्ञा-पालनत्वेन परिणामयन् स सर्व्वथा कर्म्मद्वेषं विजहाति । पुनरि बन्धुविनाशे स्वभावतो यच्छोकमोहावुपतिष्ठेते, तौ पुन: वयं [illegible]त-दु:खादिकमतीता इत्यभिमानवन्तो द्विषन्ति, न तथा गुणातीतपुरुष:, यथा हि दृश्येते श्रीरामचन्द्रस्य सीतावियोगे शोकमोहौ, यथा च आचार्य्यस्य यदुकुलध्वंसे । एवं यदा सत्त्वकार्य्यं वैराग्याद्यभ्यास:, रज:कार्य्यं कार्य्योद्यम:, तम:कार्य्यं मोह: स्वयं निवर्त्तते तत्तदवस्था-श्रयोपस्थिते:, न स पुनस्तामाकाङ्क्षति । वस्तुतस्तु न जातु शरीरवतां गुणकार्य्याणि निवर्त्तन्ते, बलप्रयोगात् निवर्त्तयितुमनसां स्यादेव निश्च-यमकृतार्थता । ये पुनस्तेषां निवृत्तौ प्रवृत्तौ वा तिष्ठन्त्यविकृतचित्तास्त एव स्थितप्रज्ञा गुणातीतपुरुषा इत्याचार्य्यस्याभिप्राय: । २२ ।

उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥२३॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्व्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥
माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६॥

किमाचार इत्यस्योत्तरमाह त्रिभिरुदासीनवदिति, समदुःखसुख इति, मानापमानयोरिति। उदासीनवत् अपक्षपातित्वेन निर्लिप्तभावेन आसीनो यो गुणैः सत्त्वादिकार्य्यैर्न विचाल्यते न विचलितो भवति, गुणा वर्त्तन्ते स्वकार्य्याणि कुर्व्वन्ति इत्येवं निश्चित्य योऽवतिष्ठते, न इङ्गते न गुणकार्य्यानुरूपेण चेष्टते, यः समदुःखसुखः समे सुखदुःखे यस्य, स्वस्थः नियतमात्मस्वरूपे स्थितः, समलोष्टाश्मकाञ्चनः समानि लोष्टाश्मकाञ्चनानि यस्य, तुल्यप्रियाप्रियः तुल्ये प्रियाप्रिये यस्य, धीरः विकारहेतावविकारी, तुल्यनिन्दात्मस्तुतिः तुल्ये निन्दात्मस्तुती यस्य, यो मानापमानयोस्तुल्यः, मित्रारिपक्षयोस्तुल्यः, सर्व्वारम्भपरित्यागी "भवदाज्ञयैव संसारयात्रामनुवर्त्तयिष्ये" इति न्यायात् ईश्वराज्ञापालनं ऋते स्वाहङ्कारप्ररोचनया स्वाभाविककर्म्माण्यपि कर्त्तुमनीहः, स गुणातीत उच्यते। २३—२५।

'कथमेतांस्त्रीन् गुणानतिवर्त्तते' इत्यस्योत्तरमाह माञ्चेति। यः साधकोऽव्यभिचारेण ऐकान्तिकभावेन—ज्ञानकर्म्माद्यमिश्रेणेति श्रीमद्विश्वनाथः, वस्तुतस्तु "ये तु सर्व्वाणि कर्म्माणि मयि सन्न्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते ॥" (१२।६) इत्युक्तेनानन्येन

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।

भक्तियोगेन—भक्तियोगः भजनं भक्तिः सैव योगस्तेन विवेकज्ञानात्म
केन भक्तियोगेनेति श्रीमच्छङ्करः । भजनं परमप्रेमा स एव युज्यते-
ऽनेनेति योगः तेन इति श्रीमद्गिरिः ; मयि भगवति तैलधारावदवि-
च्छिन्नवृत्तिप्रवाहिमनःप्रणिधानरूपेण योगेन इति श्रीमन्नीलकण्ठः—
"स्नेहपूर्व्वमनुध्यानं भक्तिरित्युच्यते बुधैः" इति श्रीमद्रामानुजोक्तवच-
नानुरूपेण, "ये तु सर्व्वाणि कर्म्माणि मयि सन्न्यस्य मत्पराः" इत्याचा-
र्य्येणाद्योषितेन भक्तियोगेन मां सर्व्वान्तर्य्यामिणं सेवते—पराक्चित्ततां
विना सदानुसन्दधाति इति श्रीमद्गिरिः, ध्यायतीति श्रीमन्नीलकण्ठः—
भजते, स एतान् गुणान् समतीत्य अतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय
ब्रह्मस्वरूपैक्याय—ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयमिति
श्रीमन्माध्वः—कल्पते योग्यो भवति । ब्रह्मभूयायेत्यत्र श्रीमद्बलदेवः—
"यस्तु ब्रह्मभूयायेत्यनेन मद्रूपतां स यातीति पार्थसारथिनोपदिष्टमिति
व्याचष्टे तन्निरवधानमेव । तेनैव 'इदं ज्ञान'मित्यादिना मोक्षेऽपि
स्वरूपभेदस्याभिहितत्वात्, 'निरञ्जनं परमसाम्यमुपैति' इत्यादि श्रुति
ष्वपि तत्र तस्य दृष्टत्वात् ; अणुत्वविभुत्वादिनित्यधर्म्मक्रान्तत्वेन नित्य-
त्वाच्च तद्भेदस्य । तत्राष्टगुणाष्टकविशिष्टत्वमेव ; 'ब्रह्मैव सन् ब्रह्मा-
प्येति' इति श्रुतौ ब्रह्मवद्भूतः सन् ब्रह्माप्येति प्राप्नोतीत्यर्थः,—'एवौ-
पम्येऽवधारणे' इति विश्वप्रकाशात्, 'वद्वा यथा तथैवैवं साम्ये'
इत्यमरकोषाच्च,—अन्यथा ब्रह्मभावोत्तरो ब्रह्माप्ययो न सङ्गच्छेत"
इति । २६ ।

कोऽहं यस्मिन्ननन्यभक्तियोगेन गुणातीतत्वं साध्यते तदाह ब्रह्मण

इति। ब्रह्मणः प्रकृतेः—मायाया इति श्रीमन्माध्वः, परमात्मन इति श्रीमच्छङ्करः, तत्पदवाच्यस्य सोपाधिकस्येति श्रीमन्मधुसूदनः, वेदस्येति श्रीमन्नीलकण्ठः—प्रतिष्ठा प्रतिष्ठीयतेऽस्मिन्निति प्रतिष्ठा आश्रयः—प्रतिष्ठत्यस्मिन्निति श्रीमच्छङ्करः, प्रतिमेति श्रीमच्छ्रीधरः, तात्पर्य्येण पर्य्यवसानस्थानमिति श्रीमन्नीलकण्ठः—अहं सर्व्वान्तर्यामी—प्रत्यगात्मेति श्रीमच्छङ्करः—अव्ययस्य नित्यस्य अमृतस्य मोक्षस्य, शाश्वतस्य नित्यस्य धर्म्मस्य च, ऐकान्तिकस्य सुखस्य च प्रतिष्ठा। अत्र श्रीमच्छङ्करेण अहंशब्देन प्रत्यगात्मेत्यभिधाय अहं प्रत्यगात्मा ब्रह्मणः प्रतिष्ठा इत्यर्थो निष्पन्नः। ब्रह्म प्रत्यगात्मनि प्रतितिष्ठतीति ब्रह्मणः प्रतिष्ठा प्रत्यगात्मेति तन्मतम्। श्रीमच्छ्रीधरस्तु प्रतिष्ठा-शब्देन प्रतिमेति गृहीत्वा 'घनीभूतं ब्रह्मैवाहम्' इति व्याचष्टे। श्रीमन्नीलकण्ठस्तु श्लोकमिममेवं व्याख्यातवान्,—"ब्रह्मणो वेदस्य प्रतिष्ठा तात्पर्य्येण पर्य्यवसानस्थानमहमेव। अमृतस्य कर्म्मब्रह्मोभयदर्शनद्वाराऽमृतसाधनस्य अव्ययस्य अनादित्वादनन्तत्वादपौरुषेयत्वेनाप्रामाण्यशङ्काकलङ्कशून्यस्य स्वतः प्रमाणभूतस्येत्यर्थः। एतेनोपक्रमोपसंहारादिपर्य्यालोचनया वेदाविरुद्धतर्कोपकरणया शास्त्रस्य तात्पर्य्यं मद्दर्शनकामेन निर्णेतव्यमिति विचारणाख्या द्वितीया भूमिरुक्ता। हेतुफलोपदर्शनमुखेन शुभेच्छाख्यां प्रथमां भूमिमाह शाश्वतस्येति। काम्यधर्म्मवत् फलदानेन नाशाभावात् भगवत्यर्पितो नित्यो धर्म्मः शाश्वतः विविदिषादिपारम्पर्य्येण मोक्षाख्यशाश्वतफलहेतुत्वात् शाश्वतस्य च प्रतिष्ठा परमं प्राप्यं फलमहमेव। तथा ऐकान्तिकं विषयसङ्गतान्यसुखव्यभिचारिस्वरूपभूतं मोक्षसुखं तस्यापि प्रतिष्ठा पराकाष्ठा अहमेव। एवं निष्कामधर्म्मेण विशुद्धचित्तस्यैकान्तिकसुखेच्छा भवति सेयं शुभेच्छाख्या प्रथमा भूमिः।" इति। पक्षमिदं ब्रह्मणोऽप्यधिकत्वस्थापनाय स्वेष्टस्य सादरेण वैष्णवाचार्य्यैः सर्व्वत्र परिगृहीतम्। श्रीमच्छङ्करपथानुसारी श्रीमन्मधुसूदनोऽपि पक्षान्तरे तेषामेव सरणिमाश्रित्याह "एतादृशस्य ब्रह्मणो

यस्मादेव वास्तवं स्वरूपं तस्मात्मद्भक्तः संसारान्मुच्यत इति भावः। तथा चोक्तं ब्रह्मणा भगवन्तं श्रीकृष्णं प्रति—'एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयं ज्योतिरनन्त आद्यः। नित्योऽक्षयोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः' इति। अत्र सर्व्वोपाधिशून्य आत्मा ब्रह्म त्वमित्यर्थः। शुकेनापि स्तुतिमन्तरेणैवोक्तम्—'सर्व्वेषामेव वस्तूनां भावार्थो भवति स्थितः। तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् ॥' इति। सर्व्वेषामेव कार्य्यवस्तूनां भावार्थः सत्तारूपः परमार्थो भवति कार्य्यकारणे जायमाने सोपाधिके ब्रह्मणि—स्थितः। कारणसत्तातिरिक्तायाः कार्य्यसत्ताया अनभ्युपगमात् तस्यापि भगवतः कारणस्य सोपाधिकस्य ब्रह्मणो भावार्थः सत्तारूपोऽर्थः भगवान् कृष्णः सोपाधिकस्य निरुपाधिके कल्पितत्वात्, कल्पितस्य चाधिष्ठानानतिरेकात् भगवतः कृष्णस्य च सर्व्वकल्पनाधिष्ठानत्वेन परमार्थसत्यनिरुपाधिब्रह्मरूपत्वात्, अतः किमतद्वस्तु तस्मात् श्रीकृष्णादन्यद्वस्तु पारमार्थिकं किं निरूप्यतां, तदेवैकं वस्तु पारमार्थिकं नान्यत् किमपीत्यर्थः, तदेतदभिप्रेत्योक्तं ब्रह्मणो हि प्रतिष्ठाहमिति" इति। अध्यायारम्भे "मम योनिर्महद्ब्रह्म" इत्युक्तत्वादुपसंहारे स एव ब्रह्मशब्द इति सरलं पन्थानमनुसृत्य 'ब्रह्मणः प्रकृतेः' इत्यर्थोऽस्माभिर्निष्पन्नः। अहन्तु सर्व्वत्रैव सर्व्वान्तर्यामित्वेन शास्त्रेषु दृष्टत इति नास्ति प्रयोजनमर्थान्तरसाधने।

अर्थसंग्रहः श्रीमद्गिरिणा—"अनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं पञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्त्तकत्वमित्येतदुपपादयता मुमुक्षोः यत्नसाध्यं गुणैरचाल्यत्वादि मुक्तस्यायत्नसिद्धं लक्षणमिति निर्द्धारितम्" इति; श्रीमद्बलदेवेन—'संसारो गुणयोगः स्यात् विमोक्षस्तु गुणात्ययः। तत्सिद्धिर्हरिमत्यैव वेत्थेतदुक्तं चतुर्दशात् ॥" इति; श्रीमद्विश्वनाथेन—"अनर्थ एव त्रैगुण्यं निस्त्रैगुण्यं कृतार्थता। तच्च भक्त्यैव भवतीत्यध्यायार्थो निरूपितः ॥"

इति ; अद्वैतपथाश्रयिणा श्रीमता भर्तृहरिणा—"यः क्षेत्रज्ञः पुरा प्रोक्तो गुणातीतः स एव हि । पुरुषोत्तम इत्युक्त एवमैक्यं सुसंस्थितम् ॥" इति । २७ ।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये चतुर्दशोऽध्यायः ।

---

# पञ्चदशोऽध्यायः ।

श्रीभगवानुवाच —

ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

अतीताध्याये गुणानां बन्धकारणत्वं तन्मोक्षोपायश्चानन्यभक्तियोग-
मुक्त्वा स्वस्वरूपमाहात्म्यं तर्यामिणः सङ्क्षेपेणाचार्य्यैः । अधुना तदेव विस्प-
ष्टयितुमध्यायोऽयमारभ्यते । विना वैराग्यमात्मज्ञानञ्च चित्तस्य संसा-
रवैमुख्येनेश्वरमुखीनता न सम्भवति अतएव तत्पूर्व्वकमेव प्रस्तुतस्याव-
तारणोर्द्ध्वमूलमित्यादिना । अत्र श्रीमच्छङ्करः—"यस्मान्मदधीनं क-
र्म्मिणां कर्म्मफलं, ज्ञानिनाञ्च ज्ञानयोग्यधर्म्मप्राप्यं सुखञ्च ज्ञानफलम्,
अतो भक्तियोगेन मां ये सेवन्ते मत्प्रसादात् ज्ञानप्राप्तिक्रमेण गुणातीता
मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वं सम्यक् विजानन्त इति ।
अतो भगवानर्ज्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच ऊर्द्ध्वमूलमित्यादि ।
तत्र तावद्वृक्षरूपकल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य
हि संसारात् भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्य" इति ; श्रीमद्रामा-
नुजः—"क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोः स्वरूपं विशोध्य
विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्य पुरुषस्यैव प्राकृतगुणसङ्गप्रवाह-
निमित्तो देवाद्याकारपरिणतप्रकृतिसम्बन्धोऽनादिरित्युक्तम् । अनन्तरे
चाध्याये पुरुषस्य कार्य्यकारणोभयावस्थप्रकृतिसम्बन्धो गुणसङ्गमूलो
भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्ग-
निवृत्तिपूर्व्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम् । इदानीं
भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतियुक्तात् विभूतिभूतात्
क्षराक्षरपुरुषद्वयात् निखिलहेयप्रत्यनीककल्याणैकतानतयात्यन्तोत्कर्ष-
रूपेण विसजातीयस्य पुरुषोत्तमत्वञ्च वक्तुमारभते । तत्र तावदसंग्रय-

रूपगस्वच्छिन्नमवस्थामश्वत्थविभूतिञ्च वस्तु ज्ञेयरूपं वृक्षाकारेण विततमचित्परिणामविशेषमश्वत्थवृक्षाकारं कल्पयन् श्रीभगवानुवाच" इति ; श्रीमन्माध्वः—"संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति" इति ; श्रीमच्छ्रीधरः—"वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटम्। वैराग्योपस्कृतं ज्ञानमीशः पञ्चदशेऽदिशत्॥ पूर्व्वाध्याये 'माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते' इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवतीत्युक्तम्। न चैकान्तभक्तिर्ज्ञानं वा अविरक्तस्य सम्भवतीति वैराग्यपूर्व्वकं ज्ञानमुपदेष्टुकामः प्रथमन्तावत् सार्द्धश्लोकाभ्यां संसारस्वरूपं वृक्षं रूपकालङ्कारेण वर्णयन् श्रीभगवानुवाच" इति ; श्रीमद्बलदेवः—"पूर्व्वत्र विज्ञानानन्दस्यौत्पत्तिकगुणाष्टकस्यापि जीवस्य कर्म्मरूपानादिवासनानुगुणेन भगवत्सङ्कल्पेन प्रकृतिगुणसङ्गः, स च बहुविधस्तदत्ययश्च भगवद्भक्तिशिरस्केन विवेकज्ञानेन भवेत् ; तस्मिंश्च सति सम्प्राप्तनिजस्वरूपो जीवो भगवन्तमाश्रित्य प्रमोदी सर्व्वदा तस्मिंस्तिष्ठतीत्युक्तम्। अथ तद्विवेकज्ञानस्थैर्य्यकरं वैराग्यं जीवस्य भजनीयभगवदंशत्वं भगवतः स्वेतरसर्व्वोत्तमत्वं चोक्तेष्वर्थेषूपयोगाय पञ्चदशेऽस्मिन् वर्ण्यते। तत्र तावद्गुणविरचितस्य संसारस्य वैराग्यच्छेद्यत्वात् संसारं वृक्षत्वेन वैराग्यञ्च शस्त्रत्वेन रूपयन् वर्णयति भगवान्" इति ; श्रीमन्मधुसूदनः—"पूर्व्वाध्याये भगवता बन्धहेतून् गुणान् व्याख्याय तेषामत्ययेन ब्रह्मभावो मोक्षो मद्भजनेन लभ्य इत्युक्तम्—'माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥' इति। तत्र मनुष्यस्य तव भक्तियोगेन कथं ब्रह्मभाव इत्याशङ्कायां स्वस्य ब्रह्मरूपताज्ञापनाय सूत्रभूतोऽयं श्लोको भगवतोक्तो—'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च। शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च॥' इति। अस्य सूत्रस्य वृत्तिस्थानीयोऽयं पञ्चदशोऽध्याय आरभ्यते। भगवतः श्रीकृष्णस्य हि तत्त्वं ज्ञात्वा तत्प्रेमभजनेन गुणातीतः सन् ब्रह्मभावं कथमाप्नुयाल्लोक इति तत्र 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यादिना भगव-

इत्थमाकर्ण्य मम तुल्यो मनुष्योऽयं कथमेवं वदतीति विस्मयाविष्टं भयाल्लज्जया च किञ्चिदपि प्रष्टुमशक्नुवन्तमर्जुनमालक्ष्य कृपया स्वस्वरूपं विवक्षुः श्रीभगवानुवाच" इति ; श्रीमन्नीलकण्ठः—"पूर्वाध्यायान्ते सुखस्यैकान्तिकस्य प्रतिष्ठा परा काष्ठाहमित्युक्तं, तत्र किंलक्षणं तत्सुखं, केन वा प्राप्यं, केन वा साधनेनासावित्याकाङ्क्षः, केन वाधिकारिणा तत्प्राप्यमित्यादि वर्णयितुं पञ्चदशोऽध्याय आरभ्यते" इति ; श्रीमद्विश्वनाथः—"पूर्वाध्याये 'माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥' इत्युक्तम् । तत्र त्वं मनुष्यस्तव भक्तियोगेन कथं ब्रह्मभाव इति चेत् सत्यम् । अहं मनुष्य एव किन्तु ब्रह्मणोऽपि तस्य प्रतिष्ठा परमाश्रय इत्यस्य सूत्रस्य वृत्तिस्थानीयोऽयं पञ्चदशाध्याय आरभ्यते" इति । प्रथमन्तावत् संसारस्य स्वरूपमाह ऊर्ध्वमूलमिति । ऊर्ध्वं सर्वातीतं ब्रह्म तदेव मूलं कारणमस्येति ऊर्ध्वमूलम्—कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्चोर्ध्वमुच्यते ब्रह्म अव्यक्तमायाशक्तिमत् तन्मूलमस्येति श्रीमच्छङ्करः, सर्वलोकोपरिनिविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वमिति श्रीमद्रामानुजः, ऊर्ध्वो विष्णुः, ऊर्ध्व उत्तम इति श्रीमन्माध्वः, ऊर्ध्वमुत्तमः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्येति श्रीमच्छ्रीधरः, ऊर्ध्वं सर्वोपरि सत्यलोके प्रधानबीजोत्थप्रथमप्ररोहरूपमहत्तत्त्वात्मकचतुर्मुखरूपं मूलं यस्येति श्रीमद्बलदेवविश्वनाथौ, ऊर्ध्वमुत्कृष्टं मूलं कारणं स्वप्रकाशपरमानन्दरूपत्वेन च ब्रह्म, अथवा ऊर्ध्वं सर्वदा सर्वबाधेऽप्यबाधितं सर्वसंसारभ्रमाधिष्ठानं ब्रह्म तदेव मायया मूलमस्येति श्रीमन्मधुसूदनः, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इति श्रुतिप्रसिद्धं मानुषानन्दमारभ्योत्तरोत्तरशतगुणवृद्धानन्दसोपानपङ्क्तिरूपपरिस्थितं परमानन्दाख्यं वस्तु ऊर्ध्वं तदेव मूलं मूलकारणमस्येति श्रीमन्नीलकण्ठः—अधःशाखम् अधः अर्वाञ्चो महाभूताद्याः शाखा इव यस्य तं—महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमिति श्रीमच्छङ्करः, पृथिवीनिवासिसकलनर-

**अधश्चोर्द्ध्वं प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**

पशुमृगपक्षिकृमिकीटपतङ्गस्थावरान्ता अधःशाखत्वमिति श्रीमद्रामानुजः, अध इति ततोऽर्व्वाचीनाः कार्य्योपाधयो हिरण्यगर्भादयो यस्मात् तं तु शाखा इव शाखा यस्य तम् इति श्रीमच्छ्रीधरमधुसूदनौ, अधः सत्यलोकादर्व्वाचीनेषु स्वर्भुवर्भूलोकेषु देवमनुष्यकिन्नरासुरयक्षराक्षसमनुष्यपशुकीटपतङ्गस्थावरान्ता नानादिक्प्रसूतत्वात् शाखा यस्य तमिति श्रीमद्बलदेवविश्वनाथौ, ऊर्द्ध्वादधःसोपानस्थानीयाः शाखा इव शाखा अव्यक्तमहदहङ्कारपञ्चतन्मात्रषोडशविकारहिरण्यगर्भविराट्प्रजापतिसुरगन्धर्व्वासुरनरतिर्य्यक्स्थावररूपा यस्य सोऽधःशाखस्तमिति श्रीमन्नीलकण्ठः –अश्वत्थं वटाद्यपेक्षया न श्वस्थिरं तिष्ठतीत्यश्वत्थः वृक्षविशेषस्तं, संसारपक्षे न श्वोऽपि स्थातुं योग्यम्, अथ च अव्ययं सनातनं प्रवाहक्रमेण स्थायिनं प्राहुर्वेदविद इति शेषः । यस्य संसारवृक्षस्य पर्णानि पर्णानीव पर्णानि छन्दांसि ऋग्यजुःसामलक्षणानि धर्म्माधर्म्मप्रतिपादनेन संसाररक्षकाणि, यस्तं संसारवृक्षं जानाति स वेदवित् वेदार्थज्ञाता । संसारस्य मूलं ब्रह्म वेदस्य च, अतएव तयोरेकत्र सन्निवेशः । अतएवाह श्रुतिः "ऊर्द्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ।" (काठ, ६।१) इति । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्व्वेदोऽथर्व्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यान्यस्यैवैतानि सर्व्वाणि निश्वसितानि ।" (बृ, आ, उ, ४।४।१०) इति । तथाच विष्णुपुराणम्–"स भिद्यते वेदमयः स वेदं करोति भेदैर्बहुभिः सशाखम् । शाखाप्रणेता स समस्तशाखा ज्ञानस्वरूपो भगवाननन्तः ॥" (३अं, ३अ, २०श्लो) इति । १ ।

तस्यैव संसारवृक्षस्यापरावयवकल्पनोच्यते अधश्चेति । गुणप्रवृद्धा

अधश्च मूलान्यनुसन्ततानि
कर्म्मानुबन्धीनि मनुष्यलोके ॥२॥
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा।
अश्वत्थमेनं सुविरूढ़मूल-
मसङ्गशस्त्रेण दृढ़ेन छित्त्वा ॥३॥
ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्त्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीभूताः, विषयप्रवालाः विषयाः शब्दादय एव प्रवालाः पल्लवा इव यासां ताः, तस्य संसारवृक्षस्य शाखाः मनुष्यपश्वादिरूपाः, नीचगत्या अधश्च उत्कृष्टगत्या ऊर्द्ध्वञ्च प्रसृताः। मनुष्यलोके मर्त्त्यलोके कर्म्मानुबन्धीनि कर्म्मैव अनुबन्धः पश्चाद्भावो येषां तानि—वासनाभ्यः कर्म्माणि कर्म्मभ्यः वासना इत्यनवरतरूपाणि अधश्च चात् ऊर्द्ध्वञ्च अनुसन्ततानि विस्तृतानि मूलानि जटोपजटा-वृन्दानि। २।

अस्य वृक्षस्यानुपलभ्यमानस्वरूपमुक्त्वा तच्छेदनेन संसारगतिनिवृत्तिमाह द्वाभ्यां न रूपमिति, तत इति। अस्य संसारवृक्षस्य रूपम् इह अत्र यथा वर्णितं न तथा उपलभ्यते उपलब्धिगोचरं भवति, निखिलजगज्जीवानामेकत्रोपलब्धेरसम्भवत्वात्; अस्य संसारस्य न अन्तः न चादिः, अनाद्यनन्तब्रह्ममूलत्वात्; न च सम्प्रतिष्ठा न च स्थितिः, कथं तिष्ठतीति नोपलभ्यते मूले दृष्टेरभावात्। अतः सुविरूढ़मूलं बद्धमूलमेनमश्वत्थं संसारवृक्षम् असङ्गशस्त्रेण अनासक्तयस्त्रेण वैराग्येण छित्त्वा पृथक्कृत्य, ततः तदनन्तरं यतः पुराणी चिरन्तनी प्रवृत्तिर्जग-

निर्म्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढ़ाः पदमव्ययं तत् ॥५॥

न तद्भासयते सूर्य्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम ॥६॥

प्रवृत्तिः प्रसृता विस्तृता, तमेव च आद्यं पुरुषं प्रपद्ये शरणं व्रजामि इत्येवं तत्पदं स्थानं परिमार्गितव्यम् अन्वेष्टव्यम्, यस्मिन् गता भूयः पुनरपि न निवर्त्तन्ति, संसारगतिं न प्राप्नुवन्ति, "एषोऽस्य परमो लोकः" इति न्यायेन तस्मिन् परब्रह्मण्येव निवसन्ति। ३।४।

के पुनस्तत्स्थानं प्राप्नुवन्ति तदाह निर्म्मानेति। निर्म्मानमोहा मानो दर्पः मोहो मिथ्याभिनिवेशः तद्रहिताः, जितसङ्गदोषाः सङ्गः विषयेष्वासक्तिः स एव दोषो जितो यैस्ते, अध्यात्मनित्याः अध्यात्ममात्म-परमात्मविषयकमालोचनं तस्मिन् नित्यास्तत्पराः, निवृत्तकामाः विशेषतो निवृत्ताः कामा येषां ते, सुखदुःखसंज्ञैर्द्वन्द्वैर्विमुक्तास्तत्सहिष्णवः, अमूढ़ाः ज्ञानवन्तः, तत् अव्ययं चिरन्तनं शाश्वतं पदं स्थानं गच्छन्ति प्राप्नुवन्ति। ५।

तत्पदं विशिनष्टि न तदिति। न तत्पदं सूर्य्यो भासयते, न शशाङ्कः चन्द्रः, न पावकोऽग्निः, यत्पदं गत्वा न निवर्त्तन्ते संसारगतिं न प्राप्नुवन्ति तत् मम परमं धाम लोकः—वैष्णवपदमिति श्रीमच्छङ्करः, परमं ज्योतिः मम मद्विभूतिभूतो ममांश इति श्रीमद्रामानुजः; स्वरूपं परममिति श्रीमच्छ्रीधरबलदेवौ, स्वरूपात्मकं पदमिति श्रीमन्मधुसूदनः, तत् मम परमं धाम हृत्तिरूपज्ञानादवमात् अन्यज्ञानिविमात्तं, ममेति सम्बन्धो राहोः शिर इतिवदुपचारात् मदभिन्नं ज्योतिः स्वयम्प्रकाशमिति श्रीमन्नीलकण्ठः, सर्व्वोत्कृष्टमजड़मतो-

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

न्द्रियं तेजः सर्व्वप्रकाशकमिति श्रीमद्विश्वनाथः। वस्तुतस्तु 'एषोऽस्य परमो लोकः' इति न्यायात् "न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति ॥" (कठ, ५।१५) इति सर्व्वावभासकं परमं ब्रह्मैव मम धामेत्यनेन व्यज्यते। यदुद्धृतं हरिवंशवचनं श्रीमता विश्वनाथेन "तत्परं परमं ब्रह्म सर्व्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥" इति ; तत्तु "ब्रह्मणो हि प्रतिष्ठाऽहम्" इति न्यायात् महतो महत् ब्रह्म विष्णुशक्तिमेवाभिप्रेत्योक्तमिति ज्ञेयम्। ६।

कोऽयं जीवः यस्य संसारबन्धमोचनं भविष्यति कुतो वास्य संसारेण सम्बन्धो जायते तदाह ममेति। जीवलोके सनातनो नित्यैकरूपः ममान्तर्यामिण एव अंशः अंश इव अंशः—"नांशो" इति वचनात् परिमितचित्खण्डः जीवभूतः। अतएवाह श्रुतिः—"यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥" (मु, उ, २।१।१) इति। तथाच बृहदारण्यके—"स यथोर्णनाभिस्तन्तुनोच्चरेत् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि व्युच्चरन्ति" (बृ, आ, उ, ४।१।२०) इति। 'सर्व्वे प्राणाः' इत्यत्र 'सर्व्व एत आत्मानः' इति श्रीमन्नीलकण्ठधृतः पाठः। नैषोऽसमञ्जसः "अस्मिन्नात्मनि सर्व्वाणि भूतानि सर्व्व एत आत्मानः समर्पिताः" (बृ, आ, ५।१५) इति तत्रैवोक्तत्वात्। अयं जीवभूतः परिमितचित्खण्डः प्रकृतिस्थानि प्रकृतिविलीनानि मनःषष्ठानि मन एव षष्ठं येषां तानि इन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि कर्षति आकर्षति प्रकृतेर्गृह्णाति। दर्शनश्रवणरसनघ्राणस्पर्शनशक्तयो ज्ञानात्मिकाः प्रकृतिसंसर्गादेव प्रस्फुरन्ति, कर्णशष्कुल्यादौ च स्वस्वक्रिया

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥
श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढ़ा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥

अभिव्यञ्जन्ति, तत एव कर्म्मेन्द्रियाणां वाक्पाण्यादीनां क्रियाप्रवृत्ति-रिति न तेषामत्र स्वतन्त्रोल्लेखः । ७ ।

तान्याकृष्य किं करोतीत्याह शरीरमिति । यत् यदा ईश्वरः शरीरस्य स्वामी शरीरी शरीरमाप्नोति गृह्णाति यत् यदा च अपि उत्क्रामति शरीराद्बहिर्निर्गच्छति, आशयात् कुसुमादेर्वायुर्गन्धानिव एतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा संयाति । मन इत्यनुक्त्वा मनः-षष्ठानीति यदुच्यते तेन मनस्येव साक्षाद्ज्ञानेन्द्रियाणामन्तर्भावो लक्ष्यते —"न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते," "मनसा ह्येव पश्यति मनसा शृणोति" इत्यादिन्यायात् । ८ ।

मनःषष्ठानि ज्ञानेन्द्रियाण्यधिष्ठाय विषयान् भुङ्क्ते जीव इत्याह श्रोत्रञ्चेति । अयं जीवः श्रोत्रं, चक्षुः, स्पर्शनं त्वगिन्द्रियञ्च, रसनं रसनां, घ्राणमेव च मनश्च अधिष्ठाय विषयान् शब्दादीनुपसेवते उप-भुङ्क्ते । ९ ।

तं जीवं विद्वांस एव पश्यन्ति न तु मूढ़ा इत्याह उत्क्रामन्तमिति । उत्क्रामन्तं देहाद्बहिर्निर्गच्छन्तं, स्थितं वापि देहे, भुञ्जानं विषयान् वा, गुणान्वितं चैतन्यगुणयुक्तम्—सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगत-मिति श्रीमच्छङ्करः, सत्त्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादि-संस्थानपिण्डसंसृष्टमिति श्रीमद्रामानुजः, इन्द्रियादियुक्तमिति श्रीम-च्छ्रीधरः,—जीवं विमूढ़ा नानुपश्यन्ति अपरोक्षज्ञानविषयं न कुर्व्वन्ति,

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्व्वाः सोमो भूत्वा रसात्मकः ॥१३

ज्ञानचक्षुषो विद्वांसो विवेकिनः पश्यन्ति प्रत्यक्षीकुर्व्वन्ति । अविवेकिनो हि शरीरादात्मानं विवेक्तुं न शक्नुवन्ति, ये पुनः साधनैः लब्धविवेक-हृदयाः, ते तं शरीरादिविविक्तमुपलभन्ते । १० ।

विना प्रयत्नं न तं पश्यन्तीत्याह यतन्त इति । यतन्तो यत-मानाः यत्नं कुर्व्वन्तो योगिनो योगं युञ्जाना आत्मनि मनसि आस्थि-तमेनं जीवं पश्यन्ति, यतन्तोऽपि यत्नं कुर्व्वन्तोऽपि अकृतात्मानः असंस्कृतात्मानः दुश्चरितादविरताः अचेतसोऽविवेकिनो नैनं जीवं पश्यन्ति । अत्र श्रुतिः—"नाविरतो दुश्चरितान्नाशान्तो नासमा-हितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥" (कठ, २।२४) इति । ११ ।

"न तद्भासयते सूर्य्यः" इत्यादिना परमात्मनो जगदतीतत्वमुक्त्वा-धुना तद्गतत्वं प्रदर्शयितुमाह यदिति चतुर्भिः । आदित्यगतं यत् तेजः अखिलं जगत् भासयते प्रकाशयति, यच्च तेजश्चन्द्रमसि चन्द्रे, यच्च तेजोऽग्नौ, तत् मामकं मदीयं तेजो विद्धि जानीहि । सूर्य्यालोकेन प्रकाशमानान् विविधान् मर्त्त्यलोकानभिप्रेत्याह 'अखिलं जगत् भास-यत आदित्य' इति । येषु न सूर्य्यालोकस्य प्रचारस्ते पुनर्लोकाश्चिन्मया अपुनरावर्त्तिनः साक्षाद्भगवत्स्वरूपाविर्भावाभिविष्टचेतोभिरापूर्णा इति तत्त्वम् । १२ ।

गामिति । अहं गां पृथिवीमाविश्य च ओजसा बलेन भूतानि

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्व्विधम् ॥१४॥

सर्व्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्व्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

धारयामि, रसात्मकः रसमयः सोमो भूत्वा सर्व्वा ओषधीः पुष्णामि संवर्द्धयामि च। १३।

अहमिति। अहं वैश्वानरो जठराग्निर्भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः प्राणापानाभ्यां तदग्न्युद्दीपकाभ्यां सहितं भक्ष्यं भोज्यं लेह्यं चोष्यमिति चतुर्व्विधमन्नं पचामि। "यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यतेऽपूपादि तद्भक्ष्यं, यत्तु केवलं जिह्वया विलोड्य निगीर्य्यते पायसादि तद्भोज्यम्, यज्जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्य्यते द्रवीभूतं गुड़ादि तल्लेह्यम, यत्तु दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्य्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यम्" इति श्रीमच्छ्रीधरः। भक्ष्यं चर्व्व्यमिति चोच्यते। १४।

सर्व्वान्तर्यामितया सर्व्वस्मिन् स्थितः परात्मेत्याह सर्व्वस्येति। सर्व्वस्य प्राणिजातस्य च हृदि अहं सन्निविष्टः, मत्तः पूर्व्वानुभूतार्थविषया स्मृतिः, ज्ञानं विषयेन्द्रियसम्बन्धघटितम्, अपोहनं तयोः प्रमोषश्च, सर्व्वैर्वेदैश्च अहमेव वेद्यः वेदितव्यः, वेदान्तकृत् तत्सम्प्रदायप्रवर्त्तको ज्ञानदोत्तमः वेदविदेव च वेदार्थविदहमेव। स्मृतेर्ज्ञानस्य च प्रमोषो भवति कथमन्तर्यामित इति जिज्ञासायां नवीनविषयाणां स्मृतिः नवीनज्ञानस्य च सञ्चारः पूर्व्वविषयाणां स्मृतेर्ज्ञानस्य च स्थानमधिकृत्यैवोदेतीति अपोहनमपसारणमपि तत्कार्य्यमेव। "अस्य महतो भूतस्य निश्वसितम्" इत्याद्यया वेदवेदान्तसूत्रव्याख्यानादीनि सर्व्वाणि परमात्मसम्भूतानीति ज्ञेयम्। १५।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥**

एवं सङ्क्षेपेण विभूतिं सर्व्वान्तर्यामित्वञ्चोक्त्वा पुरुषत्रयनिर्णयेन सर्व्ववेदान्ततात्पर्य्यं विवृणोति द्वाविमाविति। लोके संसारे क्षरश्चाक्षर एव इमौ द्वौ पुरुषौ, कौ वा क्षरः, को वाऽक्षरस्तदाह सर्व्वाणि भूतानि क्षरः ; कूटस्थो नित्योऽविकारी अक्षर उच्यते। दृश्यते हि वेदान्तेषु,—अधिभूतम, अध्यात्मम्, अधिदैवतमिति त्रिविधो भेदः। तथाहि बृहदारण्यके (४।३) मूर्त्तञ्चामूर्त्तञ्च ब्रह्मणो रूपद्वयमुक्त्वा मूर्त्तस्य क्षित्यप्तेजोरूपस्यादित्यम् अमूर्त्तस्य च वाय्वन्तरिक्षरूपस्य तन्मण्डलगत-पुरुषं दैवत्वेनाह। एते मूर्त्तामूर्त्तरूपे पुनरधिभूतान्तर्गते। अध्यात्मं पु-मूर्त्तं चक्षुः, अमूर्त्तं प्राणः, अधिदैवतं तत्र पुरुष एव। अतएवा-हाचार्य्यः—"स्वभावोऽध्यात्ममुच्यते" (८।३), "अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्" (८।४) इति। व्याख्यातञ्च प्राक्—'स्वभावः स्वो भावः स्वरूपमध्यात्मम्, प्रकृतिसंसर्गवशाद्देहे भोक्तृत्वेन प्रकाशमानमात्म-स्वरूपम्', 'क्षरतीति क्षरो विनाशी भावो जनिमद्वस्त्वित्यर्थः। अधि-भूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतम्।' 'पुरुषः समष्टिविराट् अधिदैवतमन्यादित्यादिदेवानधिकृत्य चक्षुरादिकरणान्यनुगृह्णातीत्य-धिदैवतम्।' अत्र पद्ये पुनरेतस्यैव तत्त्वस्य नवीनतरनियोग. प्रदर्श्यते ; —क्षरः पुरुषः जनिमद्वस्तुसंसर्गी, अतएव शरीराभिनिवेशवान् बद्धो जीवः, अक्षरः शरीरानपेक्षो स्वस्वरूपे वर्त्तमानो मुक्तो जीवः। आह च श्रीमद्रामानुजः—"तत्र क्षरशब्दनिर्द्दिष्टः पुरुषो जीवशब्दाभिलप-नीयो ब्रह्मादिस्तम्बपर्य्यन्तक्षरणस्वभावाचित्संसृष्टसर्व्वभूतानि। अत्रा-चित्संसर्गैकोपाधिना पुरुष इत्येकत्वनिर्द्देशः। अक्षरशब्दनिर्द्दिष्टः कूटस्थोऽचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा। स त्वचित्सं-सर्गाभावात् अचित्परिणामविशेषब्रह्मादिदेहसाधारणो न भवतीति कूटस्थ इत्युच्यते। अत्राप्येकत्वनिर्द्देशोऽचिद्वियोगरूपैकोपाधिनाभि-

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

ष्ठितः" इति । श्रीमच्छङ्करस्त्वन्यथा व्याचष्टे—"क्षरश्च क्षरतीति क्षरो विनाश्येको राशिः, अपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्म्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते । कौ तौ पुरुषावित्याह स्वयमेव भगवान्, क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः ; कूटस्थः कूटो राशिरिव स्थितः, अथवा······अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते" इति । श्रीमन्मधुसूदनः श्रीमच्छङ्करमेवानुसृतवान् । श्रीमन्नीलकण्ठस्त्वाह—"क्षरो विनाशी स च सर्व्वाणि भूतानि प्राणवन्ति कर्म्मक्षये सुप्तिप्रलयकैवल्यादौ उपाधिनाशमनु विनाशशीला जीवो ब्रह्मप्रतिबिम्बभूतो जलार्कोपमः—'विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति श्रुतेः । कूटस्थो निर्व्विकारो मायोपाधिरक्षरः, तदुपाधेरकर्म्मजत्वेन नाशासम्भवात् उपाधिदोषेणावशीकृतत्वात्स्वांशो न क्षरति स्वरूपान्न च्यवत इत्यक्षरः" इति । श्रीमच्छ्रीधर आह—"क्षरः पुरुषो नाम सर्व्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि, अविवेकिलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः । कूटो राशिः शिलाराशिः पर्व्वत इव देहेषु नश्यत्स्वपि निर्व्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स त्वक्षरः पुरुष उच्यते विवेकिभिः" इति । श्रीमद्बलदेवः श्रीमद्रामानुजमेवानुसृतवान् । श्रीमद्विश्वनाथस्त्वाह—"क्षरः स्वस्वरूपात् क्षरति विच्युतो भवतीति क्षरो जीवः, स्वस्वरूपान्न क्षरतीत्यक्षरो ब्रह्मैव" इति । १६ ।

एवं पुरुषद्वयमुक्त्वा नियन्तारं तृतीयं पुरुषमाह उत्तम इति । अन्यः क्षराक्षराभ्यां पुरुषाभ्यां विलक्षणः उत्तमः पुरुषः शास्त्रेष्वपरोक्षभावेनाहमिति शब्दवाच्यः परमात्मा—आत्मत्वेन क्षरात् परमत्वेनाक्षरात् विलक्षणः—इति उदाहृतः कथितः श्रुतिभिः, तद्यथा— उत्तीत-